# पातञ्जल-योगदर्शनम्

## तत्त्ववैशारदीसंवलित-व्यासभाष्यसमेतम्

सांख्ययोगविद्याविवरणपरया पातञ्जलशास्त्र-
परिचयात्मिकया भूमिकया अनुक्रमण्या च
विभूषितम्

सम्पादकः

कापिलाश्रमीयपातञ्जलयोगदर्शनकारलब्धयोगविद्यः

श्रीरामशंकरभट्टाचार्यः ( व्याकरणाचार्यः, एम० ए०, पी एच० डी० ), अनुसन्धानसहायको भूतपूर्वः ( पौराणिकभूगोलकोशकर्मणि काशीहिन्दूविश्वविद्यालये; पुराणविषयानुक्रमणीकर्मणि काशिराजन्यासे च ); भूतपूर्वोऽध्यापकः ( काशीस्थटीकमाणीसंस्कृतमहाविद्यालये ); भूतपूर्वः सम्पादकः ( सनातनधर्मप्रचारक—'सिद्धान्त'-पत्रस्य ); विशेषज्ञसमिति-सदस्यरूपेण मनोनीतः ( केन्द्रीयहिन्दीनिदेशालयाधीन-पारिभाषिकशब्दनिर्माणकर्मणि ); व्याकरण-पुराण-दर्शनग्रन्थानां सम्पादकोऽनुवादकः प्रणेता च ।

भारतीय विद्या प्रकाशन

२२/३९ पंचगंगाघाट

वाराणसी ।

# समर्पणम्

पातञ्जलमहाभाष्योत्तानता न्यायदृष्टितः ।
मया प्रविदिता सम्यग् यस्याध्यापनगौरवात् ॥
तस्मै श्रीरघुनाथाय शास्त्रिणे शब्द-चुञ्चवे ।
समर्प्यते श्रद्धयेदं श्रीपातञ्जलदर्शनम् ॥

योगिवराणां दार्शनिक–मूर्धन्यानां
म० म० गोपीनाथकविराजमहाभागानाम्

## आशीर्वादः

The new edition of the Patanjala Yogasutra with the commentary of Vyasa and the Tattvavaisaradi of Vacaspati Misra, under the editorial supervision of Pt. Ram Shankar Bhattacharya has been received by me. It has impressed me as an exquisite and brilliant attempt in view of the fact that it has aimed at ensuing the accuracy of the text and specially on account of the learned introduction prefixed to it consisting of 93 pages. The Introduction deals with numerous topics relevant to the subject, a knowledge of which is deemed essential for a proper understanding, not only of the present text but also of the Yoga-Sastra as a whole. Though it may not be possible for every one to be in perfect accord with every thing that the writer has said, there is no doubt that the Introduction bears in it an unmistakable evidence of wide reading, sound scholarship, critical discernment and sometimes rare insight. I am confident that it will remove to a great extent a longfelt want in connection with the study of Yoga.

Varanasi,
26. 5. 1963.

GOPINATH KAVIRAJ

## मुद्रणाशुद्धि-संशोधनम् ( भूमिकायाम् )

| पृष्ठम् | पङ्क्तिः | अशुद्धः पाठः | शुद्धः पाठः |
|---|---|---|---|
| ५ | ५ | तथा | शास्त्रं ( आकरस्थलं तु १२।१०५ इति ) |
| ६ | ७ | मार्जिता | मृष्टा |
| ७ | ७ | काय | कार्य |
| ८ | ४ | न | नु |
| ६ | ७ | नम् | ना |
| ६ | २६ | ष्यते | प्यते |
| १६ | १० | भुंक्तानि | भूंतानि |
| १६ | १३ | त्यागान्तरं | त्यागानन्तरं |
| २४ | ४ | यतो | यतः |
| ३० | १ | दिष्टमादौ | दिष्टाऽदौ |
| ३१ | १३ | कल | काल |
| ३१ | २८ | यति | यन्ति |
| ३२ | १ | त्रास्यपि | त्रस्यापि |
| ३६ | १६ | योगा | योग |
| ४२ | १६ | अतो | अतः |
| ४६ | १२ | भावात्रा | भावा |
| ४७ | २८ | क्वचिद्ध | क्वचिच्च |
| ५६ | ४ | सद्दशेव | सद्दश्येव |
| ५७ | २५ | वादमेव लक्षितम् | वाद एव लक्षित इति भिक्षुः |
| ५७ | ३१ | sohhy | sophy |
| ६२ | १३ | पेकम् | पेयम् |
| ६३ | १५ | नामासु | नामसु |
| ६४ | १६ | तथाप | तथापि |
| ६४ | २० | विर्हिता | र्विहिता |
| ७२ | २७ | प्रतिप्रतिपादितम् | प्रतिपादितम् |
| ६१ | ६ | व्यानो | व्यानो |

क्वचित् 'तत्त्व'-स्थले 'तत्व'-पाठो मुद्रितः ।

ॐ नमः परमर्षये

# सम्पादकीया निवेदना

अथेह स्मारं स्मारं गुरोर्गिरो यथाबुद्धि सम्पादितं पातञ्जलयोगदर्शनम् । वंगाक्षरमुद्रितानि देवनागराक्षरमुद्रितानि च प्रायेण सर्वाणि योगदर्शनसंस्करणानि व्यवहृतान्यस्माभिः । तत्त्ववैशारदीपाठश्च यत्नतः संशोधितः, विरामचिह्नानि च सर्वत्र स्थापितानि। यत्र च 'इत्युक्तं प्राग्' इत्येतादृशं वाक्यं मिश्रेणोक्तं, तत्र पूर्वसन्दर्भस्य निर्देशोऽपि कृतः । उद्धृतानां वचसामाकरस्थलानि प्रायेण सर्वत्र निर्दिष्टानि । भाष्य-तत्त्ववैशारदीगत-वचनाकरनिर्देशविषये भूमिकायां विचारितम् । यत्र त्वाकरश्लोके भूयान् पाठभेदोऽवलोक्यते, तत्र 'तुल०' ( तुलना कार्या ) इति शब्दो व्यवहृतः । भाष्यटीकाधृत-पुराणादिश्लोकानुपूर्वी मुद्रितपुराणादिषु सर्वत्र न समानोपलभ्यते—इति विज्ञेयम् । या चातिविशदा अनुक्रमणीह संयुक्ता, साऽत्युपकारिणी भवेदित्याशास्महे वयम् ।

पातञ्जलयोगविषये यदस्माकं वक्तव्यम्, तत् सर्वं युक्तितो भूमिकायां विवृतम्। भूमिकेयं समासतः प्रणीता, ग्रन्थान्तरे भूमिकोक्ता विषया विशदीकरिष्यन्ते[1] ।

---

१. भूमिकायां बहवो विषया न विशदीकृताः । ते च मत्प्रणीतेषु ग्रन्थान्तरेषु द्रष्टव्याः । अप्रकाशिताश्चेमे ग्रन्थाः—१ सांख्ययोगीयम् [ श्लोकमयो ग्रन्थः, सांख्ययोगीयाः पदार्था युक्तितः प्रतिपादिताः ], २—भक्तिकौस्तुभः [ श्लोकमयो ग्रन्थः, अकृत्रिमार्षी भक्तिरत्र प्रतिपादिता ], ३—सांख्यविद्या [ हिन्दीभाषामया निबन्धा भूततन्मात्रादिविवेचनपरा इह संकलिताः ], ४—योगविद्या [ कर्म-चित्त-संस्कार-योगाङ्गादिपरायणा हिन्दीभाषामया निबन्धा अत्र संकलिताः ], ५—काललुप्ता सांख्ययोगविद्या [ पञ्चशिखहारीतदेवलाद्युक्तानां दर्शनेतिहासपुराणस्मृतिनिबन्धग्रन्थादिदर्शितानां सांख्ययोगप्रतिपादकवचनानां संकलनं व्याख्या च ], ६—सांख्यकारिका का प्रसंख्यान भाष्य [ सांख्यकारिकोक्तयुक्तीनां मौलिकी व्याख्या, सांख्यमतदूषणपरिहारश्च ], ७—Dharana-Sutram ( Sutras in Sanskrit with a Commentary in English; वेदान्तसांख्यन्यायादीनां बौद्धजैनादीनां शाक्तशैवादीनां च धारणालक्षणादीनि संकलितानि ) ।

यदि कश्चित् संख्यावान् भूमिकायाः खण्डनं कुर्यात्, तर्हि स्वपक्षस्थापनमहं करिष्यामीति निवेद्यते ।

ग्रन्थसम्पादनकर्मणि उपकृतोऽहं बहुधा बहुभिः । प्रूफादिसंशोधन-कर्मणि मित्रवर्येण सम्पादनकलाकुशलेनानेकशास्त्रविदा श्रीगोविन्दनरहरिवैजा-पुरकरमहोदयेन महत् साहाय्यमाचरितम् । शुद्धप्रतिलिपिकरणे श्रीरमापदचक्र-वर्ति-गोपालशर्मभ्यां मदन्तेवासिभ्यां महान् प्रयासो विहित इति ताभ्यामपि सस्नेह-धन्यवादः प्रदीयते । एतादृशजटिल-ग्रन्थप्रकाशकाय भारतीयज्ञान-प्रचारकामिणे 'भारतीयविद्याप्रकाशना'धिकारिणे चापि बहुशो धन्यवादा दीयन्ते—ग्रन्थान्तरप्रकाशने चापि तस्य सन्मतिः स्यादिति । अतिश्रमी ग्रन्थमुद्राकरोऽपि धन्यवादार्हः। एषामुपकारजातं कृतज्ञेन मया स्वीकरणीयमेव ।

"न हि किञ्चिदपूर्वमत्र वाच्यं न च संग्रन्थन-कौशलं ममास्ति ।
अत एव न मे परार्थचिन्ता स्वमनो वासयितुं कृतं मयेदम् ॥
मम तावदनेन यातु वृद्धिं कुशलं भावयितुं प्रसादवेगः ।
अथ मत्समधातुरेव पश्येदपरोऽप्येनमतोऽपि सार्थकोऽयम्" ॥

अक्षयतृतीया
२६—४—१९६३
१५१ ए. शिवाला, वाराणसी।

विद्वदनुचरः
श्री रामशंकर भट्टाचार्यः

# भूमिकादिप्रयुक्त-संक्षिप्तशब्दानां विवरणम्

अ०—अध्यायः

अथर्व०—अथर्ववेदः ( शौनकशाखा )

अनु०—अनुशासनपर्व ( महाभारतस्य )

अष्टा०—अष्टाध्यायी

आदि०—आदिपर्व ( महाभारतस्य )

आ० ध० सू०—आपस्तम्बधर्मसूत्रम्

ई०—ईसवीयवत्सरः, खीष्टाब्दः

ऋग्०—ऋक्संहिता शाकलशाखीया

उप०—उपनिषत्

ऐ० आ०—ऐतरेयारण्यकम्

का०—कारिका

गी०—गीता

छा०—छान्दोग्योपनिषत्

टी०—टीका

तत्त्वकौ०—तत्त्वकौमुदी

तत्त्ववै०—तत्त्ववैशारदी

तुल०—तुलना कार्या

तै० आ०—तैत्तिरीयारण्यकम्

तै० उप०—तैत्तिरीयोपनिषत्

तै० ब्रा०—तैत्तिरीयब्राह्मणम्

तै० सं०—तैत्तिरीयसंहिता

द्र०—द्रष्टव्यम्

धा० पा०—धातुपाठः ( क्षीरतरङ्गिणी )

ध० सू०—धर्मसूत्रम्

न्या० वा० ता० टी०—न्यायवार्त्तिकतात्पर्यटीका

न्यायवा०—न्यायवार्त्तिकम्

पु०—पुराणम्

पृ०—पृष्ठम्

प्रक०—प्रकरणम्

बृ०, बृहदा०—बृहदारण्यकोपनिषत्

ब्र० सू०—ब्रह्मसूत्रम्, वेदान्तदर्शनम्

ब्रह्माण्ड०—ब्रह्माण्डपुराणम्

ब्रा०—ब्राह्मणम्

भ० गी०—भगवद्गीता

भा०—भाष्यम्

भाग०—भागवतम्

मत्स्य०—मत्स्यपुराणम्

मनु०—मनुस्मृतिः

यजुः०—याजुषमाध्यन्दिनसंहिता

याज्ञ०—याज्ञवल्क्यस्मृतिः

यो०—योगसूत्रम्

योगवा०—योगवार्त्तिकम्

लिङ्ग०—लिङ्गपुराणम्

वन०—वनपर्व (महाभारतस्य)

वाक्यप०—वाक्यपदीयम्

वायु०—वायुपुराणम्

विव०—विवरणटीका (व्यासभाष्यस्य)

वृ०—वृत्तिः

वै० वा० इ०—वैदिक वाङ्मय का इतिहास

व्या०—व्याख्या

व्या० शा० इ०—संस्कृत व्याकरण शास्त्र का इतिहास

शत०—शतपथब्राह्मणम्

शान्ति०—शान्तिपर्व ( महाभारतस्य )

शां० भा०—शांकरभाष्यम्

शारीरक०—शारीरकभाष्यम् ( शंकरकृतम् )

श्लो०—श्लोकः

श्वे० उ०, श्वेताश्व०—श्वेताश्वतरोपनिषत्

सं० व्या० इ०—संस्कृत व्याकरणशास्त्र का इतिहास

संस्क०—संस्करणम्

सां०—सांख्यम्

सां० द० इ०—सांख्यदर्शन का इतिहास

सू०—सूत्रम्

स्मृ०—स्मृतिः

हठयो०—हठयोगप्रदीपिका

H. Dh. S—History of Dharmasastra.

H. I. P—History of Indian Philosophy.

I. H. Q.—Indian Historical Quarterly.

I. P—Indian Philosophy.

O. D. S. S. T—Origin and Development of the Samkhya System of Thought.

S. B. S.—Sarasvati Bhavana Studies.

---

॥ ॐ आदिविदुषे कपिलाय नमः ॥

# भूमिका

ऐश्वर्यज्ञानवैराग्यधर्मरूपविभास्वते ।
रुद्राय विष्णवे काय नम आदिशरीरिणे ॥ १ ॥
अशेषसांख्ययोगार्थप्रवक्ताऽमितधीर्ऋषिः ।
धर्ममेघान्वितः शान्तो जयतु श्रीपतञ्जलिः ॥ २ ॥

## प्रथमं प्रकरणम्*

### सांख्ययोगविद्या, तस्या महत्त्व-प्रचार-ह्रासाश्च

सांख्ययोगविद्या—इह[1] खलु भगवान् सिद्धेश्वरः सांसिद्धिकज्ञानवैराग्यैश्वर्यसम्पन्नो विवेकख्यातिपरवैराग्यनिरोधशीलः परमर्षिः कपिलः सांख्यविद्यायास्तदनुगतयोगविद्यायाश्च आदिमः प्रवक्तेति शिष्टपरम्परासु प्रसिद्धिः । आह चात्र पञ्चशिखः—"आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति ( १।२५ व्यासभाष्यधृतमिदं वाक्यं पञ्चशिखोक्तमिति वाचस्पतिः ) । अत्र तन्त्रपदेन सांख्यशास्त्रं लक्ष्यते । अस्येतिवृत्तस्य कालः, तन्त्रस्य, तन्त्रप्रवचनस्य च स्वरूपमित्यादयो विषया उपरिष्टाद् विवेचयिष्यन्ते ।

अत्रेदं विज्ञेयं यन्निर्माणचित्तं समाधि-प्रभवम्, समाधिश्च यमादियोगाङ्गानुष्ठानजः । अतो निर्माणचित्तमिति पदं समग्रां योगविद्यां लक्षयति—इत्यभ्युपेयमेव । एतेन सांख्ये योगविद्याया अनुप्रवेशोऽर्वाक्कालिक इति केषाञ्चिद् मतमपार्थकमेव । तथैव ध्यानावलम्बनीभूतपदार्थानां यौगिकत्वात्, योगविद्यायां सांख्यीयतत्त्वानामनुप्रवेशोऽर्वाक्कालिक इत्याधुनिकगवेषकाणां मतं तर्कासहमिति वेदितव्यम् । अतः कपिलेन योगविद्याऽपि आन्वीक्षिकी-

---

* भूमिकेयं चतुर्भिः प्रकरणैर्विभक्ता । एषु प्रकरणेषु असंकीर्ण-सांख्ययोगविद्यादृष्ट्या विषया विवेचिताः । सा च दृष्टिरस्माभिः कापिलाश्रमीय–पातञ्जलयोगदर्शनकार–स्वामिश्रीहरिहरानन्दारण्यचरणतः प्राप्ता । स्वामिचरणकृतग्रन्थेभ्यश्चात्र युक्त्युदाहरणानि बहून्याहृतानि ।

१. सुखावबोधार्थं बहुत्र पदानि संहिताकार्यमकृत्वैवेह स्थापितानि ।

पद्धत्या प्रोक्तेति गम्यते ( हिरण्यगर्भादिकृतयोगप्रवचनादिविषयाः प्रकरणान्तरे द्रष्टव्याः ) । किञ्च, सांख्यीया भूततन्मात्रादिपदार्थाः योगजप्रज्ञयैव साक्षात् क्रियन्ते, इति नित्यमिलितौ सांख्ययोगौ । महाभारते शान्तिपर्वणि सांख्यं योगं चाधिकृत्य यदेकत्वेन पृथक्त्वेन चोक्तम्, तत इदं गम्यते यदात्मज्ञानस्य तत्त्वकाण्डं सांख्यम्, साधनकाण्डं च योग इति। अतः सांख्ययोगौ परस्परपूरकाविति कथयितुं शक्यते । आह च भगवान् देवलः—"पञ्चविंशतितत्त्वज्ञानं सांख्यम्, विषयेभ्यो निवृत्त्याऽभिप्रेतेऽर्थे मनसोऽवस्थापनं योगः" इति ( कृत्यकल्पतरु-मोक्ष-काण्डधृतमिदं वाक्यम्, पृ० १६५ ) । अत्राभिप्रेतार्थशब्देन सांख्यीया भूत-तन्मात्रेश्वरादयो ग्राह्याः। कचिच्च, तत्त्वनिदिध्यासनपरायणाः सांख्याः, क्रियायोग-परायणाश्च योगा इत्यपि विवक्षा दृश्यते । रुचिवैचित्र्येण एतादृशे भेदे सत्यपि तत्त्वतो न भेदः, यथाह—"एकं सांख्यं च योगं च यः पश्यति स पश्यति" ( गीता ५।५ ) इति ।

आत्मविद्या—पुरेयं सांख्ययोगविद्या 'अध्यात्मयोग'-पदवाच्यासीदिति ज्ञायते । यथोक्तम्—"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति ( कठ० उप० १।२।१२ ) । क्वचिच्च, सांख्यकाण्डं विद्यापदे-नापि लक्षितम्, तदेतद् 'विद्यामेतां योगविधिं च कृत्स्नम्' ( कठ. उप. २।६।१८ ) इति कठवाक्यतोऽवगम्यते । वस्तुतः सगुणं निर्गुणं चात्मज्ञानं तत्प्राप्त्युपायभूतं चित्तैकाग्र्यादि च सांख्ययोगविद्याया मुख्यं प्रतिपाद्यं वस्तु । अध्यात्मचिन्ताविवरणपरं यत् प्रवचनमुपलभ्यते, तत्र सांख्यीयदृष्टिः स्पष्टमुप-लभ्यते ( द्र० शान्ति० ३१५।१०, अत्र याज्ञवल्क्यकृताध्यात्मज्ञानं वर्णितम्, तच्च च सांख्यानुयायि ) । क्वचिच्च ससाधनमात्मज्ञानम् अध्यात्मविद्यापदवाच्यं भवति, अत एव 'अध्यात्मविद्या विद्यानाम्' इत्युच्यते। आत्मपदेन शुद्धं पुरुष-तत्त्वमेव ज्ञापितं भवतीति कृत्वा अध्यात्मपदं प्रयुज्यते, येन द्रष्टृ-दृश्यरूपे द्वे मूलभूते तत्त्वे गृहीते स्याताम् । यतो हि दृश्यादव्यक्तादपि पुरुषः परः, अतो निःश्रेयसदृष्ट्या आत्मा आत्मज्ञानं वा परत्वेनोच्यते । यथाह मनुः—

"सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्" (११।८५) इति। याज्ञवल्क्यो-ऽप्याह—"अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्" इति ( १।८ ) । श्रुति-श्चात्र–पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः" इति (कठ० १।३।११)।

आत्मपदेन शुद्धा चित्, त्रैगुणिको व्यावहारिक आत्मभावश्च गृह्येते; अत एव अस्मिताऽप्यात्मपदवाच्या भवति । 'आत्मन एष प्राणो जायते' इत्यादिषु श्रुतिषु अस्मितायुक्तोऽभिमानी पुरुषविशेष एव आत्मपदेन ग्राह्यः, न खलु निर्गुणा चिज् जनिक्रियाया आधारो भवितुमर्हति । पञ्चशिखोऽपि

महत्तत्त्वमभिलक्ष्य 'अणुमात्र आत्मा' इत्याह ( १।३६ व्यासभाष्यधृतं पञ्चशिखवाक्यं द्र० )। अत एव चिदचिद्विषयकं सर्वं तात्त्विकं समाधिजं च ज्ञानमात्मज्ञानपदवाच्यमिति। "शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते", "संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते, तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्तिताः" इत्यादिभिरभियुक्तवचनैरपि आत्मज्ञानापरपर्यायभूता सांख्यविद्येति सिद्धम्।

**सांख्ययोगविद्यावैशिष्ट्यम्**—सेयं सांख्ययोगविद्या दुःखनाशायालमिति कृत्वा दुःख-तत्कारण-तद्धानोपायादिविषया अत्र युक्तितः समयतश्च विवृता:[१]। न खलु दुःखकारणादीन्यज्ञात्वा कश्चिद् दुःखनिरोधकरणे शक्त इति कृत्वा दुःखकारण-तन्निरोधहेतुभूतं कार्यकारणात्मकं विज्ञानमिह आन्वीक्षिकोपद्धत्या विवृतम्। प्रमेयज्ञानं च प्रयोगपरीक्षण-बलमन्तरेण नार्थसाधकमित्यतः साधनबलमपि विशेषतो योगे विवृतम्। अत एवोच्यते—'नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्" इति ( शान्ति० ३१६।२ )। अत एव सांख्येति नाम सम्यग्दर्शनात्मकत्वात् प्रचलति इत्युपरिष्टादभिधास्यते। तत्त्वदर्शनोपायो योग इति प्रसिद्धमेव। ( शारीरक० २।१।३ द्र० )। अत एव सांख्ययोगशास्त्रं चतुर्व्यूहमित्यभ्युपगतम्। तदेतद् विवृतं व्यासभाष्ये—"यथा चिकित्साशास्त्रं चतुर्व्यूहम्.........एवमिदमपि शास्त्रं चतुर्व्यूहमेव, तद् यथा—संसारः, संसारहेतुः, मोक्षः, मोक्षोपायः" इति ( २।१६ )। तत्र मोक्षोपायभूतानि योगाङ्गानि, तदनुष्ठानज्ञानार्थं चित्तादीनामविद्यादीनां च ज्ञानम्, कर्मादीनां च विज्ञानम्, अभ्यासवैराग्यस्वरूपं चेत्यादयो योगविद्याया असाधारणा विषयाः। साधनदशा च प्रधानादयः पदार्था अपीहोपन्यस्ता विचारिताश्च; त इमे सांख्यविद्याया असाधारणविषयाः।

यत इदं शास्त्रं न्यायोपजीवि, अतः यथेच्छं तर्कणीयाः प्रधानादिपदार्थाः। तर्कतोऽपि सांख्ययोगीयाः सर्वे पदार्थाः सामान्यतः सिद्धा भवन्तीत्यन्यत्र दर्शितम्। न्यायोपजीवित्वाच्च नात्र प्रतिपदं शब्दप्रमाणस्यापेक्षा वर्तते। अत एव च कलावशिष्टमपि सांख्ययोगशास्त्रं समग्रां विद्यां बोधयितुं समर्थम्, यथा दृष्टमुदरम् पृष्ठमप्यनुमापयेत्, तथात्रापि विज्ञेयम्। किञ्च, तत्त्वतो विश्लेषणे कृते सति सांख्यशास्त्रोक्तानां पदार्थानामनुक्तं वैशिष्ट्यादिकमपि ज्ञायते, अनभिहिता बहवोऽवान्तरपदार्था अपि विज्ञाताः साक्षात्कृताश्च भवन्ति। न खलु प्रमेय-

१. यथाह सांख्यविद् देवलः—"एतौ सांख्ययोगौ चाधिकृत्य यैर्युक्तितः समयतश्च पूर्वंप्रणीतानि विशालानि गम्भीराणि तन्त्राणीह संक्षिप्य उद्देश्यतो वक्ष्यन्ते" ( याज्ञ० प्रायश्चित्ताध्यायः १०९, अपरार्कटीका द्र० )

गताः सर्वे विशेषाः शब्दानुमानाभ्यां ज्ञातुं शक्यन्त इत्यतः भूतादीनां प्रत्यक्षीकरणमावश्यकम्, प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते, इति च न्यायानुसारिणी दृष्टिः। तथाहि—योगसूत्रे समानोदानजयहेतुकानि फलानि प्रोक्तानि ( ३।३९–४० ) प्राणव्यानापानजयहेतुकानि च नोक्तानि। युक्त्या चानुक्तानां फलानां सामान्यज्ञानं भवत्येव, अभ्यासेन च कृत्स्नं ज्ञानं स्यादित्यस्माकं मतम्। योगसूत्रादयः खलु अनुशासनग्रन्थाः, नैतेषु सर्वमर्थजातं विवृतमित्यतः प्रयोगतो न्यायतश्चेयं विद्याऽभ्यसनीया, न शब्दमात्रतः। भूतादीनां तत्त्वानां प्राणायामादीनामभ्यासानां च शास्त्रेष्वनुक्तं बहु वैशिष्ट्यं योगाभ्यासिभिर्ज्ञायत एव।

सांख्ययोगविद्याप्रवर्तनम्—अत्रेदं विज्ञेयम्—ग्राह्य-ग्रहण-ग्रहीतृभेदेन त्रिधावर्त्तमानानां पदार्थानां योगबलेन साक्षात्कारे कृते सति सर्वदुःखानामेकान्तात्यन्ततो नाशः संभवति, यतो हि निरोधकाले एव ज्ञः पुरुषः दुःखाधारभूतबुद्धितः पृथग् भवति, स्वरूपेणावतिष्ठते; स्वरूपज्योतिरमलः केवली भवति। स च निरोधस्तत्त्वज्ञानमन्तरा न शाश्वतिको भवति—इति नान्तरीयकं खलु योगस्य सांख्यम्। वैकल्पिकमवास्तवं तत्त्वज्ञानं न खलु वास्तवदुःखनाशायालम्, अतः सांख्ययोगविद्याप्रमेयाः साक्षात्कारयोग्याः सद्भूतपदार्थाः स्थूलसूक्ष्मकारणद्रव्यगताः। केवलया मेधया श्रुतेन तर्केण च योगमन्तरेण नैषामधिगमः कर्तुं शक्यते। समाधिचितिशक्त्यादयः पदार्था अलौकिकाः, अतस्तेषां ज्ञानं न लौकिकप्रत्यक्षाधीनम्, प्रत्युत चित्तस्थैर्यविशेषाधीनम्। 'इतरथान्धपरम्परेति'—( सांख्यसूत्र ३।८१ ) न्यायेनेह महदादीनामादिम उपदेष्टा साक्षात्कारिप्रज्ञासम्पन्न इत्यभ्युपेयम्। अलौकिकपदार्थविवरणपरत्वादियमध्यात्मविद्या मुक्तचित्तेनैव उपदेशनीया। मुक्तचित्तपरम्पराऽपि अनादिः, सर्वकाले एव मुक्तिश्रवणात्। अतो मोक्षसाधनभूताऽध्यात्मविद्या अनादिकालतः प्रवृत्तेति योगिनां दृष्टिः शास्त्रानुसारिणी। सेयं दृष्टिर्न्यायेनापि प्रमाणयितुं शक्यते, तद् यथा—"वस्तूनां जातिरनादिः, मूलकारणानां नित्यत्वात्, तस्माद् बद्धजातीयकं तथा च मुक्तजातीयकं चित्तमनादि, ततश्च मुक्तचित्तयोग्या मोक्षविद्याऽपि अनादिरिति" ( द्र० भास्वती १।२४ )। मुक्तचित्तपदेन सर्गादिजन्मा हिरण्यगर्भोऽपि गृह्यते, तदभिध्यानपरायणेषु सर्गादिकालभवेषु मुनिषु तत एव तत्त्वज्ञानलाभदर्शनात्।

एवं सत्यपि अस्मिन् सर्गे सा विद्या उत्सर्गापवादरीत्या मनुजहितार्थम् आन्वीक्षिकीमार्गेण च ससाधना कपिलेनादौ प्रोक्तेति अनपलाप्यमिति वृत्तम्। तेनैव भगवता पूर्वप्रचलितमात्मज्ञानमुपपत्तिभिः प्रोक्तम्, सर्वतः प्रथमम्। अत एवेदं सम्यग्दर्शनमिति कृत्वा सांख्यमित्यभिहितमासीद् ऋषि-

समाजे। वस्तुतस्तु आदिमाः सिद्धा उपदेष्टारो योगविषये चरमाणि सत्यतत्त्वानि भाषितवन्तः कृत्स्नशः, सिद्धचित्तेषु तत्त्वज्ञानपूर्णतादर्शनात्। अत एव पतञ्जलि-प्रभृतिभिरनुशासनमेव कृतम्, न पुनरपूर्वस्य शास्त्रस्य सर्जनम्।

सांख्ययोगविद्याभ्युपगतानि प्रमाणानि—प्रमाणविषये मनूक्तं मतमेव सांख्ययोगिनामनुमतम्—"प्रत्यक्षमनुमानं च तथा च विविधागमम्। त्रयं सुविदितं कार्यम्" इति (१२।१५)। लौकिकं प्रत्यक्षम्, (यच्च यान्त्रिकं प्रत्यक्षं तदपि लौकिकमेव) ध्यानजं प्रत्यक्षं चाध्यात्मविद्यासंमतम्। योगशास्त्रे नाड्यादीनां यद् विवरणमुपलभ्यते तद् ध्यानजदर्शनानुसारीति विज्ञेयमत एव जडविज्ञानेन सह न तत् सर्वथा संवदति। योगर्द्धिमद्भिर्ऋषिभिर्यत् स्वीयं वेदनं शास्त्ररूपेण प्रकाशितं तदपि प्रमाणम्। वस्तुतोऽस्माकमिदं सुचिन्तित-मभिमतं यत् सांख्ययोगविद्यामन्तरेण न कश्चिद् वेदगतान् पदार्थान् विवरीतु-मीष्टे। अग्निवाय्वादिदेवतानां स्वरूपं कर्म च ऐश्वर्यतत्त्वज्ञानमन्तरा न सुखावबोधम्। आरण्यकेषु या मुख्यतः प्राणविद्या वर्तते, उपनिषत्सु यत् सगुण-मैश्वर्ययुक्तं निर्गुणमीश्वरातीतं च वस्तु वर्णितम्, तयोरुपपत्तिः सांख्ययोगेनैव करणीया; अन्यथा वेदवचसामाम्रेडनमात्रमेव भवेदित्यस्माकं प्रत्ययम्। अत एव 'ईशावास्यमिदं सर्वम्' इत्यादिश्रुतीनां कार्यकारणोपदर्शकयुक्तिबलेन प्रमाणीकरणं न व्याख्याकारैर्योगविद्भिः कृतमिति दृश्यते। यत् सद्भूतं वस्तु साक्षात्कृतं भवति, तदस्तित्वस्वरूपादयो नूनं न्यायेनोपपादनीयाः स्युरिति।

सेयं सांख्ययोगविद्याऽऽन्वीक्षिकीपथेन प्रचारितर्षिसमाजे पञ्चशिख-पतञ्जलि-प्रभृतिभिः। तत्त्वसाक्षात्कारिणामृषीणां यद् वेदनं तद् यैर्न्यायैः प्रमाणीक्रियते, तेषां न्यायानां समष्टिरेव दर्शनम्। सांख्यविद्या खल्वेतादृशन्यायोपबृंहितेति। अत उक्तम् 'सांख्यं तु मोक्षदर्शनम्' इति (शान्ति० ३००।५)। उपपत्तिपूर्वकं कथनं श्रुतावपि क्वचिदास्ते—"कथमसतः सज्जायेते"त्यादिषु। याज्ञवल्क्यादयो-ऽपि तर्कोपपत्तिभिरात्मसत्तां प्रतिपादयामासुः (बृह० ४।५।१ शा. भा.)। मनुरपि अनुमानोपयोगितामाह (१२।१०६), अत एवान्वीक्षिक्या उपादेयता योगिभि-रप्युररीक्रियते। अत एव 'अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे' (शान्ति० ३०३।४७), 'अनुमानाद् विजानीमः पुरुषं सत्त्वसंश्रयम्' (अश्व० ४८।६) 'एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते' (शान्ति० ३०५।२७), आत्मा वा अरे श्रोतव्यो मन्तव्यः' (बृह० ४।५।६) इत्युच्यते आचार्यैः। भवतु नाम ब्रह्मणः स्वरूपमचिन्त्यम्, सर्वदृश्यधर्मशून्यत्वात् तस्य, परन्तु 'ब्रह्म अस्तीति' मतं खलु चिन्त्यम्, तर्केण परीक्षणीयं च। अतश्च श्रुतौ 'पुरुष इति चिन्त्यम्' इत्युक्तम् (श्वेताश्व० १।२)।

अनुमानविषये इदं विज्ञेयं यत् सामान्यतः सर्वेषां प्रकृतिपुरुषादीनां सत्ताऽनुमानेन निश्चीयते, परन्तु अनुमानतः प्रमेयगताः सर्वे सूक्ष्मा विशेषा नावगम्यन्ते। यद्यप्यस्ति मतम्—'धर्मब्रह्मविषयौ नानुमानगम्यौ' इति, परन्तु नेयमार्षी दृष्टिः। भवतु नाम अर्वाग्दर्शिभिरब्रह्मचारिभिर्ब्रह्मादयः पदार्था नानुमातुं शक्यन्ते, पारदर्शिषु कपिलादिष्वपि इयमशक्तिरासीदिति न कल्पनीयम्। कथं निर्गुणं पुरुषतत्त्वं सर्वविकारबीजं प्रधानं चानुमातुं शक्यते, तदेतत् सांख्ययोगविद्यायां विवृतमस्ति। आत्मज्ञानार्थं न्यायमार्जिता धीरावश्यकीति कृत्वा षष्टितन्त्रशास्त्रे अनुमानादीनां चर्चा कृतेति विज्ञायते। 'मन्तव्यश्चोपपत्तिभिः', 'आगमेनानुमानेन ध्यानाभ्यासरसेन च' इत्यादीनि वचांस्यत्र द्रष्टव्यानि।

साक्षात्कारिणां योऽनुभवो विशेषज्ञानप्रधानः, न स सम्यक् शब्देनाभिधीयते, न हि विशेषेण कृतसंकेतः शब्द इति। अत एव ऋतम्भरा प्रज्ञा श्रुतानुमेयप्रज्ञाभ्यामन्यविषयेति योगविदः (द्र० योगसूत्रम् १।४६)। योऽयं समाधिप्रज्ञानिर्ग्राह्यो विशेषः, न स सर्वथा शब्दगम्य इति कृत्वा श्रुत्यर्थविशदीकरणाय योगजज्ञानापेक्षा वर्तते। अत एव श्रुतिषु प्रवचनभेदतः आपातदृष्ट्या परस्परविरुद्धानि वचांसि दृश्यन्ते, तेषां समन्वयश्च स्थूलत उत्तरमीमांसापद्धत्या करणीयः, समन्वित-वाक्यार्थानां तात्त्विकं रहस्यं तु योगविद्यागम्यमेवेति। यदि नाम कश्चित् प्रेक्षावान् द्रष्टृ-दृश्य-सत्कार्यवादांश्च विज्ञाय श्रुत्यर्थस्य मननं कुर्यात्, तर्हि स सर्वत्रैव सुसङ्गतिं प्रतीयात्। परम्पराभ्रंशतो यदि योगविद्याज्ञाने कश्चिद् दोष आपतेत्, तर्हि स प्रेक्षावान् बहुत्र न्यायबलेन स्वयमेव तं दोषं ज्ञातुमपि समर्थो भवेदिति। दोषाणां कृत्स्नशो ज्ञानं खलु योगजप्रज्ञापेक्षमित्यपि स्मार्यम्।

**सांख्ययोगविद्याप्रमेयनिर्धारणदृष्टिः**—सर्वैरिदमादौ विज्ञेयं यद् अस्यां विद्यायां द्वावेव मूलभूतौ पदार्थौ—द्रष्टा, दृश्यं च। बहुविकारबीजभूतं दृश्यं परिणामशीलं चित्संयोगाद् बहुधा परिणमते। विकाराश्च 'सत्कार्यवाद'-दृष्टिमाश्रित्यैवेह व्याख्येयाः। मूलभूतं निमित्तं तु पुरुष एव, इच्छादयोऽन्तःकरणधर्मा अमौलिका अपि गौणानि निमित्तानि भवन्ति स्थूलविकारोत्पत्तय इति ज्ञेयम्। अत एवेश्वरसङ्कल्पसंभूतमिदं जगदिति मतमतात्त्विकदृष्ट्या सत्यम्, न पुनस्तात्त्विकदृष्ट्या। ग्राह्यभूतं हिरण्यगर्भान्तःकरणं खलु, ब्रह्माण्डस्य साक्षादुपादानभूतं कालव्यापि द्रव्यम्' इति सांख्यनयः। तत्त्वतस्तु ऐशान्तःकरणमपि त्रैगुणिकम्, अतस्त्रिगुणमेव सर्वोपादानमिति।

किञ्च परमार्थतः गुण-वैषम्यरूपं जगत् खलु जैव-स्थूलान्तःकरणसंपर्कात् पाषाणादिरूपेणावभासते, इत्यतः मायामात्रमिदमित्यपि सांख्ययोगदृष्ट्याऽभ्युपेयम्, यथाह भगवान् वार्षगण्यः—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥"

इति ( योगभाष्य ४।१३ धृतं वाक्यम् )।

द्रष्टारं दृश्यं सत्कायवादं चाश्रित्य सांख्ययोगीयाः पदार्था[1] नैकधोपन्यस्ताः—( क ) व्यक्ताव्यक्तज्ञरूपेण, ( ख ) प्रकृति-प्रकृतिविकृति–विकृति–अप्रकृतिविकृतिरूपेण च। प्रकृतिमहदहङ्कारादिपञ्चविंशतिपदार्थरूपेण या प्रसिद्धा पदार्थगणनारीतिः, सापि गणनाप्रकारविशेष एव, प्राणादीनामत्र पृथगनुल्लेखात्। अतः एतद्विलक्षणोऽपि गणनाप्रकारो भवितुमर्हति, यदि स द्रष्टृ-दृश्य-सत्कार्यवादानाश्रयेदिति। अत एव साधनदृष्टिभेदं विभाजकतत्त्वभेदं चाश्रित्येन्द्रियादिगणनायां मतभेदा दृश्यन्त आचार्याणाम्। नैषु स्थलेषु मतविरोधः कल्पनीयः। व्यावहारिके एतादृशे भेदे सत्यपि न तात्त्विको विरोधो भवति। न खलु लौकिकः 'अक्षीणि मे सुकुमाराणी'ति ब्रुवन् नेत्रत्रयसत्तामभ्युपैति तत्त्वतः।

एवं सर्वत्र कार्यकारणभावस्यापेक्षिकतां ज्ञात्वा 'किं कारणमापेक्षिकं चरमं वेति' विचार्यैव तत्त्वमवगन्तव्यम्। घटस्योपादानकारणं खलु कपालानीत्येव वक्तुं शक्यते, मृत्तिकेत्यपि च। उभे उत्तरे साधू, तत्रापि मृत्तिकेति कथनं साधुतरम्। एवं सांख्ययोगेऽपि विज्ञेयम्। ईश्वरप्रकृतिकं जगदिति मतं सांख्यानुमतमेव साधनदृशा, परन्तु तत्त्वतः त्रिगुणमेव मूलमुपादानम्। शङ्करादय ऐशान्तःकरणं विश्लेषयोग्यं नेति मन्यन्ते स्म, तत्र तेषामशक्तिरेव कारणम्। सिद्धेश्वरे परमर्षौ कपिले नेयमशक्तिः संभाव्यत इति।

यतो हि नियत-दृष्टिमाश्रित्य सांख्यशास्त्रं प्रवृत्तम्, अतस्तद्दृष्टौ ज्ञातायां बहवोऽनुक्ता विषया अपि ज्ञायन्ते। तथा हि—सांख्यकारिकायां क्वापि नाभिहितं यदव्यक्तं खलु सत्त्वरजस्तमसां साम्यावस्थारूपमिति। परन्तु व्यक्ताव्यक्तविषये यानि विशेषणानि स्वरूपगर्भाणि प्रदत्तानि, तैः प्रकृतेः साम्यावस्थाऽपि अवगम्यते अञ्जसा। सांख्यसप्तत्यां शब्दतोऽव्यक्तं गुणसाम्यलक्षणं नोक्तमित्यतः 'नेदं मतमीश्वरकृष्णेन ज्ञातमि'ति केषाञ्चित् कथनमज्ञानमूलकमेव। अपरमप्यु-

---

१. सांख्यीयपदार्थविषयिणी उपपत्तिरस्मत्कृते 'सांख्य-योगीय'–ग्रन्थे श्लोकमये द्रष्टव्या।

दाहरणं पतञ्जलिनोक्तम्—'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामाः व्याख्याताः" इति ( ३।१३ )। नैते शब्दा एकाग्रता-निरोध-समाधि-परिणाम-विवरणपरेषु सूत्रेषु ( ३।६—१२ ) प्रयुक्ताः, इत्येतावता यदि कश्चिद् ब्रूयात् कथं न खलु धर्मादयो ज्ञायेरन् भूतादिष्विति, तर्हि तस्येदं कथनं दार्शनिकोचितं न स्यादिति ( द्र० तत्त्ववैशारदी, ३।१३ भाष्यारम्भे )।

सांख्ययोगविद्याया मुख्या अकृत्रिमाश्च दृष्टयः—परमर्ष्युपदिष्टायाः, पञ्चशिखादिभिः प्रपञ्चितायाः नैकसंवादेषु च पल्लवितायाः अस्या विद्याया इमास्तावद् मुख्या दृष्टयः ( अत्र तत्त्वं साधनं चैकीकृत्य दृष्टय उपस्थाप्यन्ते सुखावबोधार्थम् )—

( १ ) दुःखबहुलोऽयं संसारः परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च। सत्यलोकादिष्वपि दुःखमस्ति, तेषां नाशोऽप्यस्त्येव। न केनापि लौकिकेन आनुश्रविकेण वा उपायेन दुःखस्यात्यन्तनाशो भवति विज्ञातुः।

( २ ) विज्ञातुर्द्रष्टुर्भोक्तुर्वा स्वरूपावस्थानमेव कैवल्यम्, तदवस्थायां चित्तनाशाद् दुःखात्यन्तविमोक्षरूपोऽपवर्गो भवति।

( ३ ) चित्तवृत्तिनिरोधाय योग आवश्यकः। योगबलेनैश्वर्यादिकमपि भवति, तत्तु कैवल्यापेक्षया हेयमेव। धर्मज्ञानवैराग्यैश्वर्यतारतम्यभेदतोऽसंख्येयप्रकाराः खलु जीवाः स्वतः पुरुषार्थसिद्धये प्रयतन्ते यथायथम्।

( ४ ) बद्धपुरुषाः खलु अनादिकालतः प्रवर्तन्ते। सृष्टौ प्रस्फुटकरणात्मकाः, प्रलये च लीनवत्करणसम्पन्ना जीवाः कृमिहिरण्यगर्भादिदेहधारिणः जनिमृतियुतास्तिष्ठन्ति।

( ५ ) प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः खलु अनाद्यविद्याहेतुकः। न च अत्यन्तासंकीर्णे द्रष्टृ-दृश्ये देशकालातीते कस्मिंश्चित् काले संयुक्ते इति कल्पनीयम्। विद्यया बुद्धिपुरुषवियोगदर्शनादविद्याहेतुकत्वं संयोगस्य कल्प्यते।

( ६ ) कर्म अनादि, अनादिश्चाविद्या, अनादिश्च जन्मपरम्परा। कृतार्थं पुरुषं प्रति दृश्यं नष्टमपि अकृतार्थेषु पुरुषेषु अनष्टमेव।

( ७ ) यथा ऐशचित्तव्यपदिष्टः पुरुषोऽस्ति जगत्सर्जकः (एतादृशाः पुरुषाः खल्वपि असंख्येयाः, ब्रह्माण्डानि च असंख्येयानि ), तथा जगद्व्यापारनिर्मुक्तः क्लेशकर्मविपाकाशयैरपरामृष्टः किन्तु विद्यामूलनिर्माणचित्तव्यपदिष्टः पुरुषविशेषोऽप्यस्ति। अयमुपाधिरपि अनादिः। जगत्सर्जकः पुरुषः खलु हिरण्यगर्भाक्षरादिपदैः प्रायेणोच्यते श्रुतिषु। तस्यैश्वर्यसंस्कारात् भूताद्यभिमानतश्च ब्रह्माण्डमाविर्भवति। स चाक्षरपुरुषः ईषदविद्यायुक्तः, समाधिविशेषबलेन च सर्वज्ञः सर्वाधिष्ठाता।

(८) सर्वविधैश्वर्यविनिर्मुक्तः खलु चिद्रूपः पुरुषः, यः 'अक्षरात् परतः परः' इति श्रुत्याऽभिधीयते। अयमेव अचिन्त्यः, अप्राणः, अमनाः, अव्यपदेश्यः, अलक्षण इत्युच्यते। बहुजीवदर्शनाज्जन्मादिव्यवस्थातश्च पुरुषा बहवः। पुरुषश्च अखण्डैकस्वरूपो देशकालातीतः न प्रकृतिर्नापि विकृतिः।

(९) एका त्रिगुणात्मिका दैशिककालिकावयवैर्हीना जडा प्रकृतिः सर्ववस्तूनां ग्राह्यग्रहणग्रहीतॄणामुपादानम्। प्राकृतमन्तःकरणमीश्वरताद्यनेकधर्मयुक्तं भवति। प्रकृतिरियं स्थित्या गत्या च सदैव वर्तमानम्।

(१०) कार्यमव्यक्तरूपेण उपादानकारणे विद्यते, तच्च हेतुभिर्व्यक्तीभवति। विकारभूतं कार्यं च धर्मलक्षणावस्थापरिणामैरन्वितं भवति। न चासद् उत्पद्यते, न च सतोऽत्यन्तनाशो भवति।

**योगस्वरूपं कैवल्यं च**—इह शास्त्रे योगः समाधिः, स च संप्रज्ञातासंप्रज्ञातभेदेन द्विधेति आचार्यः। ग्रहीतृग्रहणग्राह्यरूपाणि तत्त्वानि साक्षात्क्रियन्ते संप्रज्ञातयोगे, संप्रज्ञानस्यापि त्रैगुणिकत्वात् तत्रापि विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। यत्र चिद्रूपः पुरुष एवावतिष्ठते, सोऽसंप्रज्ञातयोगः। अयमेवात्मसाक्षात्कारः, यः ख्याति-परवैराग्य-निरोधानन्तरेण न सिद्धो भवति। असंप्रज्ञातसमाधिसंस्कारश्च विवर्द्धमानः ( गुणचारितार्थ्ये सति ) शाश्वतिकं चित्तलयं साधयति। पुनरुत्थानहीनचित्तलये सति कैवल्यमन्यदा जीवन्मुक्तिरिति। यदा सम्यग् ज्ञानतः निर्गुणात्मज्ञानं न भवति, तदा योगी विदेहदेवप्रकृतिलीनरूपेणावतिष्ठते। योगतः सर्वास्मिभावसिद्धौ सर्वज्ञातृत्वादिसिद्धेरीश्वरभाव आविर्भवति, ततश्च तद्वैराग्यादपि दोषबीजक्षये कैवल्यं भवतीति योगिनां न्याय्या दृष्टिः।

अत्रेदं विज्ञेयम्—अभ्यासपूर्वकं स्वेच्छया चित्तवृत्तेर्नियमनमेव योगोऽभिप्रेतः, अत एव औषधादिप्रयोगे तमोभावाधिक्येन च यस्तामसं स्थैर्यमुदेति शरीरेन्द्रियबुद्धिषु, न तद् योग इति विवेच्यम्। हठयोगाभ्यासेन शोणितादीनां श्वासप्रश्वासयोर्वा रोधो न सम्यग् योगः, संस्कारादीनां क्षयाभावदर्शनात्। योगशास्त्रोपदिष्टे तत्त्वे शरीरप्राणादिरोधपूर्वकं यच् चित्तावस्थानं तत्त्वज्ञानपूर्वकं रागद्वेषादिक्षयपूर्वकं च, तदेव योगपदेनाभिलष्यते आचार्यैः। अतएव प्राणायामासनादयोऽपि इह योगे तत्त्वज्ञानपूर्वकमेवाभ्यसनीयाः, अन्यथा अज्ञानबीजक्षयाभावादुत्थानं भवेदेव। अव्यक्तलक्षणायाः शून्यताया भावनेऽपि चित्तं न संनिरुद्धं भवति, शून्यस्य त्रिगुणातीतत्वाभावात्। सोऽयं समाधिर्ग्राह्यादिभेदात् त्रिधा, अभ्यासकौशलभेदाच्च सवितर्कादिभेदयुक्त इति सूत्रभाष्यटीकादिषु स्पष्टम्। भिक्षुश्च योगसारसंग्रहे समाधिभेदादिकं पातञ्जलदर्शनदृशा सुष्ठु निरूपयामासेति तत एवावगन्तव्यम्।

अभ्यासवैराग्यदार्ढ्यात् स्थूला विभूतयः आ आसनादिस्थैर्यतः प्रादुर्भवन्ति, प्रधानजयादयस्तु समाधिबलाधीनाः सिद्धयः । यतो हि ब्रह्माण्डमिदं मनोमात्रम्, अत. मानसबलसम्पन्ना योगिनो लीलया लौकिकैरचिन्त्यान्यपि कर्माणि कर्तुं समर्था भवन्ति । अहिंसादिप्रतिष्ठाजाताः सिद्धयोऽप्यनेनैव मार्गेण व्याख्येयाः । श्रद्धोत्पादाय विभूतिज्ञानमावश्यकमिति कृत्वा योगशास्त्रेऽयं विषयो विवृतः । विभूतितत्त्वज्ञानमन्तरा भगवत्तत्त्वज्ञानमपि दुःशकमिति विज्ञेयम् ।

सोऽयं योगः क्रियायोग-ज्ञानयोगभेदेनापि द्विविधः । आत्मबाह्येश्वरादिप्रणिधानपूर्वकं यत्र स्थैर्यमभ्यस्यते, स क्रियायोगः, स्वगतमहदादि-तत्त्वनिदिध्यासनमेव यत्र क्रियते स ज्ञानयोगः । रुचिभेदत एवायं भेदो न तत्त्वतः, यतो हि महदात्मसाक्षात्कार ईश्वरसत्ताज्ञानं च अविनाभावीति योगशास्त्ररहस्यम् । तथैवेश्वर-प्रणिधानात् स्वयमेव चित्तं ग्राह्यग्रहणादितत्त्वसाक्षात्करणे समर्थं भवेत् । अतः साधनामार्गभेद-प्रयुक्तोऽयमतात्त्विको भेदः । सगुणेश्वरं हिरण्यगर्भं निर्गुणेश्वरमनादिक्लेशकर्माद्यव्यपदिष्टं पुरुषविशेषं च प्रति प्रणिधानं भक्तियोगपदवाच्यम्[१], स च भक्तियोगो योगविद्याया अस्याः प्रमुखं वैशिष्ट्यम्। ज्ञानयोगप्रतिपादककठाद्युपनिषत्सु नायं मार्ग उपदिष्टः, श्वेताश्वतरादिषु च प्रपञ्चितोऽयम् । पञ्चरात्रभागवतादिशास्त्रेषु योगोऽयमुपबृंहितः । अर्वाचीनकाले भक्तियोगोऽयं बहुधा विपर्यासं गत इति दृश्यते ।

साधना-प्रधानत्वाद् योगशास्त्रस्य कर्मतत्त्वं विस्तरेण विवृतमत्र—कर्माशय-कर्मसंस्कार–विपाकादयो विषया उत्सर्गापवादन्यायतो विवृता दृश्यन्ते (२।१२-१४; ४।२–११) । ईश्वरप्रणिधानविचार-प्रसङ्गाद् ईश्वरस्वरूपविचारोऽपि अस्य शास्त्रस्य मुख्यविषयेष्वन्यतमः । ईश्वरचित्तमीश्वरस्वभावश्चेत्यादयो विषया न्यायेनेह परीक्षिताः । शास्त्रान्तरेषु ईश्वरस्वरूपं न न्यायेन परीक्ष्यते, केवलं यथारुचि अन्धविश्वासेन स्वीक्रियते, अत एव शंकरमध्वादिकृतानि ईश्वरप्रतिपादकवैदिकवचनव्याख्यानानि न युक्त्युपपन्नानि भवन्ति ।

कैवल्यावस्थाविषय इदं विज्ञेयं यत् तस्यामवस्थायामन्तःकरणगतगुणानां साम्यं भवति, अत एव साऽवस्था विवेकख्यातिनिरोधपरवैराग्येषु चरितार्थेष्वेव

---

१— भक्तिविषयेऽस्मत्प्रणीतः 'भक्तिकौस्तुभ'-नामा ग्रन्थो द्रष्टव्यः । ईश्वरप्रणिधानकारी कथं कैवल्यमधिगच्छतीति योगभाष्ये विवृतम् (१।२९)। सगुणब्रह्मप्रणिधानवत्सु योगिषु येनोपायेन विवेकज्ञानमुत्पद्यते, स तु शान्तिपर्वणि विवृतः (३०१।७६–७९)।

सिद्धा भवति, नान्यथा । यतः सा गुणसाम्यावस्था, अतः सा सुखदुःखशून्या, जाग्रत्स्वप्ननिद्राशून्या च । प्रलयकाले असिद्धानां जीवानां मोहपूर्वकः करणलयो भवति, अत एव ते विदेहलीनाः प्रकृतिलीनाश्च भवन्ति यथायथम्, पुनश्च उत्थिता भवन्ति । कैवल्यपदभाजः पुरुषा न पुनर्गुणसम्बन्धयुक्ता भवन्ति, अत इदं पदं पुनरावृत्तिशून्यम् । बौद्धप्रत्ययविशेषात्मकं सुखं न कैवल्यावस्थायां कल्पनीयमिति सुविज्ञेयम् । क्वचित् केवली पुरुषः परमात्मपदेन वोच्यते ( शान्ति १८७।२३ ) । ईश्वरादिष्वपि परमात्मपदं प्रयुज्यते । एतादृशे शब्दप्रयोगसंकरस्थले योगज्ञानमेव तत्त्वनिर्णायकहेतुरिति विज्ञेयम् ।

ससाधनसमाधिविचारः खलु योगविद्याया असाधारणं स्वकीयं वस्तु, सांख्ये तु पदार्थरूपेणैवैषामुल्लेखः । क्लेशानां विभूतीनां चर्चाऽपि योगाभ्यासोपकारिणीति कृत्वा प्रपञ्चितोऽयं विषयो विस्तरतः पतञ्जलिना, पुराणादिषु योगविद्याप्रस्तावेऽपि इमे विषया सुष्ठूपदर्शिताः । चित्तस्य स्वरूपम्, वस्तुचित्तसंबन्धः, चित्तरोधः, एकाग्रतादिपरिणामाश्चेत्यादयो विषयाः कैवल्यार्थमवश्यं ज्ञेयाः, अत एव चतुर्थे पादे कैवल्यविषयकं तत्त्वज्ञानमान्वीक्षिकीपद्धत्या विवृतम् । विषये अस्मिन् बौद्धादयोऽर्वाग्दर्शिनो भ्रान्ता एव, अतस्तेषां चित्तं न शाश्वतनिरोधयुक्तं भवति, चित्तातिरिक्तस्य द्रव्यस्यानधिगतत्वादिति । व्यक्ताव्यक्तज्ञरूपाणां पदार्थानां प्रविभागपूर्वकमसंकीर्णं ज्ञानं खलु सांख्ययोगिनां सम्यग्दर्शिनामेवेति ज्ञेयम् ।

**आर्षानार्षशास्त्रेषु[1] योगविद्याभ्युपगमः**—न्यायशास्त्रे योगाभ्यासोऽभ्युपगत इति सूत्रतो भाष्यादिभ्यश्चावगम्यते । अत्र—'समाधिविशेषाभ्यासात्' (४।२।३८) इति न्यायसूत्रमारभ्य 'यमनियमाभ्यासादात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः' (४।२।४६) इत्यन्तैः सूत्रैः योगविद्याभ्युपगमः कृतो गौतमेन । आह च वात्स्यायनः—"योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः । स पुनस्तपः, प्राणायामः, प्रत्याहारः, धारणा, ध्यानमिति" 'उपायस्तु योगाचारविधानमिति'' (४।२।४६) । अस्मिन् समाधावपि तत्त्वज्ञानमपेक्ष्यते इति सम्यगुक्तवान् वात्स्यायनः । समाध्यर्थमेकाग्रतादीनामभ्यासोऽपि न्यायशास्त्रे उक्तः । न्यायशास्त्रीयापवर्गचिन्ताऽपि सांख्ययोगानुगृहीतैवेति दृश्यते ।

---

१. यद्यपि आर्षं ज्ञानमेव सर्वमोक्षदर्शनमूलम्, तथापि केचन बौद्धादय आर्षं मूलं नैकान्ततः स्वीकुर्वन्ति, अतस्ते जन्मान्तरपापपुण्यविभूति-समाधि-निरोधादीन् स्वीकुर्वन्तोऽपि 'अनार्षा' इत्युच्यन्ते । शैवादयोऽपि न वेदमेकान्तत आश्रयन्ति, प्रत्युत आगमानपि, अतस्तेऽपि अनार्षप्राया एव । प्रकरणान्तरे बौद्धशैवादिसंप्रदायगतयोगविषये लघ्वी समीक्षा विधास्यते ।

वैशेषिकेऽपि सैव दृष्टिः । कणादः खलु योगाचारविभूत्या महेश्वरं तोषयित्वा वैशेषिकशास्त्रं प्रणिनायेति प्रशस्तपाद आह ग्रन्थान्ते । योगाचारपदं एकाकितादियतिधर्मं लक्षयतीति बोध्यम्, तेनैव विभूतीनामुत्पत्तिदर्शनात् । दुःखात्यन्तनिरोधस्तु वैशेषिकैरभ्युपगम्यते । योगिप्रत्यक्षं योगप्रामाण्यं चापि स्वीक्रियते, मोक्षविषयिणी चर्चाऽपि दृश्यतेऽत्र । आह च प्रशस्तपादः— "अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यक्षमुत्पद्यते" इति ( प्रत्यक्षप्रकरणम् ) । आर्षं दिव्यज्ञानमपि भाष्यकार आह—'तदिदमार्षज्ञानप्रकरणे सिद्धदर्शनप्रकरणे च प्रोक्तम्' । विशेषप्रकरणेऽन्यत्रापि योगजं ज्ञानमभ्युपेयते वैशेषिकाचार्यैः । अपवर्गसम्बन्धि वैशेषिकमतमपि योगानुगतम् ( संसारापवर्गप्रकरणीयं भाष्यं द्रष्टव्यम् ), यथाह— "तदा निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवद् उपशमो मोक्ष इति ।" यमनियमादिसत्ताऽपि स्वीकृता ( द्र० प्रशस्तपादीयं धर्मप्रकरणम् ) । वैशेषिकसूत्रेषु ( ६ । १–२ आ० ) अपि योगादिविचार आस्ते ।

उत्तरमीमांसायामपि योगाभ्यास उररीकृतः–'आसीनः संभवात्', 'ध्यानाच्च' इत्यादिभिः सूत्रजालैः ( ४ । १ । ७–११ ) । अत्र यद् 'स्मृत्यन्तराधिकरणम्' 'योगप्रत्याख्यानाधिकरणम्' च विद्येते ( २ । १ । १–३ ), ते न सांख्ययोगविद्याप्रत्याख्यानपरे । सोऽयं विषयो मया 'सांख्यविद्या' 'योगविद्या' इति ग्रन्थद्वये विवृत इत्युपरम्यते । उत्तरमीमांसासूत्रमिदं सर्वैर्भाष्यकारैराकुलीकृतमित्यवगन्तव्यम् । इदमपि विज्ञेयं यदुत्तरमीमांसया वैदिकवाक्यार्थानां मीमांसा ( परस्परविरोधपरिहारः ) क्रियते, न पुनः वैदिकप्रमेयाणां स्वरूपादिकं विशदीक्रियते प्रमाणीक्रियते वा । वैदिकशब्दानामर्थकरणं यथा शब्दविद्याया विषयः, तथा वैदिकप्रमेयस्वरूपविचारः सांख्यशास्त्रस्य विषयः । विवेचित-स्वरूपाणां प्रमेयपदार्थानां प्रतिपादकानि यानि वैदिकवाक्यानि, तेषु दृश्यमानो विरोधः परिह्रियते उत्तरमीमांसासूत्रेण, अतः भिन्नव्यापारकरणात् नोत्तरमीमांसासांख्ययोः कोऽपि विरोधः संभाव्यते । यथा न छन्दःशास्त्रेण सह निरुक्तस्य विरोधः कल्पनीयः, तथा अत्रापीति मन्तव्यम् । अयोगतत्त्वविद्भिः शङ्करादिभिर्वृथैव सांख्योत्तरमीमांसयोर्विरोधो दर्शितः । वस्तुतो न पूर्वोत्तरमीमांसे दर्शनशास्त्रे, न खलु वाक्यार्थविरोधप्रशमनं कदापि दर्शनपदवाच्यं भवितुमर्हति । यत्रान्वीक्षिकीबलेनात्मादयः परीक्ष्यन्ते तच्छास्त्रमेव दर्शनमिति । तेषु च दर्शनेषु सांख्यमेव श्रेष्ठम् । अत एव 'तत् कारणं सांख्ययोगाधिगम्यम्' इति श्रूयते । ( श्वे० उ० ६ । १३ )

न च पारमर्षी योगविद्या अंशतोऽवैदिकी इति युक्त्या सिद्ध्यति (द्र० उ० मी० २।१।३ व्याख्याः)। ऐकाग्र्यप्राणायामादयो वैदिका, अतस्तज्जात-ज्ञानं तज्ज्ञानलब्धाः प्रमेयाश्च सर्वे वैदिका इति मन्तव्यमेव, प्रमाणस्य वैदिकत्वे प्रमितेरपि वैदिकत्वात्। यदि महदादयः समाधिप्रज्ञानिर्ग्राह्याः, समाधिश्च वैदिकस्तर्हि महदादयः पदार्था अवैदिका इति कथनं (द्र० शारीरक २।१।२) प्रलपनमेव।

मीमांसाशास्त्रेण सह योगविद्यायाः संबन्धोऽस्ति, न वेति विचार्यते। कर्म-काण्डपराणि वेदवचांसि इह मीमांसितानि, अतोऽत्र योगविद्याया न प्रसङ्गा-वसरः। याज्ञिकं कर्मकाण्डमपि आध्यात्मिकाधिदैविकरहस्यमनुकरोतीति विद्मो वयम्, अतो न कर्मकाण्डं तत्त्वज्ञानविरोधि। अग्निहोत्र-दर्शपूर्णमासा-दयः कर्माणि बाह्ययागाः, परन्तु तानि अन्तर्यागं बोधयन्ति-इति गुरुपरम्परातो विज्ञेयम्।

किञ्च, ब्रह्मसूत्रे यानि जैमिनिमतानि सन्ति, ततोऽप्यवगम्यते यज् जैमिनि-रपि योगविद्याभ्यासी आसीदिति, यतो हि तेन औपनिषदमात्मज्ञानं व्याख्या-तम्, तच्चात्मज्ञानं योगाभ्यासमन्तरा न संभवेदिति (द्र० बृह० ४।४।२३) कश्चिद् महायोगीश्वरो जैमिनिर्विष्णुपुराणे स्मृतः (४।४।४८), स तु जैमिनिः सामग इति ग्रन्थान्तरदर्शनात् प्रतीयते। सामविषये तु प्रोच्यते—'सामानि यो वेद स वेद ब्रह्म' (वायु० ७६।६५, ब्रह्माण्ड० २।१५।६८), 'सामानि यो वेद स वेद तत्त्वम्' (बृहद्देवता ८।१३०), अतः सामविद् जैमिनिर्योगा-भ्यासीत्यत्र न कश्चित् संशय इति। व्यासशिष्यः सामविज् जैमिनिरेव पूर्व-मीमांसाप्रणेतेति पूर्वमीमांसाशास्त्रं न योगविरोधीति स्वीकर्तव्यमेव। एवं सत्यपि न कर्मकाण्डे योगविद्याप्रसङ्गावसर इति कृत्वा न योगसंबद्धा चर्चा कृता।

व्याकरणेऽपि योगविद्याऽस्त्येव। यथाह हरिः—

"तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥" इति।
(वाक्यप० १।१३२)।

अपि च—

"इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥" इति।
(तत्रैव १।१७)।

अन्यत्रापि शब्दविद्यायां योगशास्त्रानुगता चिन्ता दृश्यते। यथा—'ज्योतिर्वज्ज्ञानानि भवन्तीति। (महाभाष्यम् १।४।२६) शब्दब्रह्मोपासका

हि वैयाकरणाः, अतस्तेषां योगित्वे न संशयलेशोऽपि । शाब्दिकानां योग-वेत्तृत्वं च प्रसिद्धमेव ।

शिक्षाग्रन्थेषु यद्यपि न योगविद्या क्वचिदभिहिता, तथापि ओंकारमहत्त्व-मेषु ग्रन्थेषु कीर्तितमेव । उच्चारणक्रियासिद्धये कूर्मवद् अङ्गसंहरणम्, स्वस्थता, प्रशान्तता, भयहीनतेत्यादयो गुणा आवश्यका इति शिक्षाविदां मतम् ( नारदीयशिक्षा १२ )। योगशास्त्रानुगृहीता एते गुणा इति स्पष्टमेव । किञ्च, गीतक्रियाबलेन चित्तस्थैर्यमुपदिशन्ति शिष्टाः ( याज्ञ० स्मृतिः ३।११२ ), अतः शिक्षाशास्त्रान्तर्गतगानोच्चारणविद्याऽपि योगमूला एव ।

आध्यात्मिकाधिदैविकरहस्यानां प्रतिकृतिरेव याज्ञिककर्मकाण्डेनोपवर्णिता भवतीति वयं मन्यामहे । यथाह यास्कः—"याज्ञदैवते पुष्पफले देवताध्यात्मे वा" इति ( निरुक्तम् १।२० ), अतः कल्पसूत्राण्यपि योगविद्यासहायकानीति। 'स एष वाचश्चित्तस्य चोत्तरोत्तरिक्रमो यद् यज्ञः' इत्यारण्यकवचनमिह स्मार्यम् ( ऐ० आ० २।३।३ ) ।

निरुक्ते तु योगविद्याऽभ्युपगतैव । अत एव 'ऋषिर्दर्शनात्' इति निरुक्त-वाक्यव्याख्यानावसरे दुर्ग ऋषीणां तारकज्ञानान्विततां वर्णयति । निरुक्त-ग्रन्थस्य त्रयोदश-चतुर्दशाध्याययोः सांख्यम् , योगः, गुणाः, अन्ये च यौगिका विषयाः स्वीकृताः । निरुक्तगतमन्त्रव्याख्यानं योगविद्यानुगतमिति स्पष्टमेव । ज्योतिषादिशास्त्राण्यपि योगविद्यासम्बन्धीनीत्यन्यत्र प्रतिपादयिष्यते ।

**सांख्ययोगप्रतिपादकग्रन्थेषु दुष्टानि मतानि**—अस्माभिरुक्तमेव यदिदं दर्शनमान्वीक्षिकीमार्गेण प्रोक्तम्, अतो यथारुचि न कश्चिन्मेधावी शास्त्रेऽस्मिन् असंबद्धानां मतानामनुप्रवेशनं कर्तुं शक्नोति। यदि कश्चिदज्ञानतो वा न्यायदुष्टानि मतान्यत्र प्रक्षिपेत्, तर्हि द्रष्टृ-दृश्य-सत्कार्यवादानुगत-दृष्ट्या तानि मतानि अपा-करणीयानि । अत एव पुराणादिषु सांख्ययोगमतरूपेण यद् भाषितं तत्र क्वचिद् अनार्षी दृष्टिरप्यस्त्येवेति प्रतीयते । भागवतगतं ( द्र० ३।२५–३३ अध्यायाः ) सांख्यप्रकरणमस्य प्रसिद्धमुदाहरणम् । अत्र ये सन्ति श्लोकाः, ते वैष्णवसंप्रदायदृष्ट्यैव रचिताः, न सांख्ययोगदृष्ट्या । तथाहि—

३।२६।१३ श्लोको न खलु सांख्ययोगविद्यादृष्ट्या साधुः; मोक्षानुत्कर्षप्रति-पादनात् । यथा खलु मोक्षं प्रयोजनं परम्, तथा अचरमं साधनविशेषलभ्यं विदेहलयादिपदमपि प्रयोजनमिष्टमेव, यथाह सांख्याचार्यो देवलः "सायुज्यं सालोक्यं प्रकृतिलयो मोक्षश्चेति चतुर्विधं प्रयोजनम्" इति। सायुज्यादिषु दोषदर्श-नात् पुनः वशीकारवैराग्यसम्पन्नस्य योगिनः शाश्वतिकरोधार्थम् प्रयत्नो भवति तत्त्वज्ञानपूर्वकम् । अत एव भागवतसंप्रदायीयाज्ञतामूलकं दर्शनमस्मिन् श्लोके

कथितम् , नेदं पुनः सांख्यं दर्शनं ज्ञापयति । यदि सांख्यदृशा द्रष्टारं दृश्यं च कश्चिज्जानीयात्, तर्हि न्यायत एव 'न मे नाहं नास्मि' इति सांख्यकारिकादर्शित-साधनस्यापरिहार्यतां चापि स स्वीकुर्यात्। भागवते पुनरिदं साधनं नोल्लिखितम्। भागवतीये सांख्य-प्रकरणे सगुणं निर्गुणं चात्मस्वरूपमविशेषेणोक्तम् । एकमेव भगवान् सगुणश्च निर्गुणश्चेति न सांख्यीयं दर्शनम् । न वेदं दर्शनं न्यायेनापि संगमनीयम्। यदि नाम पञ्चशिखाद्युपदिष्टं सांख्यज्ञानमिह याथार्थ्येन प्रतिपादितं स्यात्, तर्हि नायं दोष आपतेत्। वस्तुतस्तु भागवतसांप्रदायिकेन केनापि स्वेष्ट-मतमहिमख्यापनाय सांख्ययोगमतं विपरिणमय्य स्वदृष्ट्या सांख्यमतम् उपनिब-द्धम् । ३।३२।३५ इत्यत्रोक्तम् "योगेन विविधाङ्गेन भक्तियोगेन चैव हि" इति। सांख्ययोगदृशा योगाङ्गेष्वेव भक्तिरपि संगृहीता, दृश्यते खल्वीश्वरप्रणिधानस्य नियमेषु अन्तर्भाव इति ( योगसूत्रम् २।३२ ) । अतोऽत्र भक्तियोगस्य पृथक् करणं भागवतकारस्यासंकीर्णसांख्ययोगविषयेऽज्ञानमेव ज्ञापयति । ३।२७।२८ इत्यत्रोक्तं यत् कैवल्याख्यं पदं भगवदाश्रयमिति; नेयं सांख्यीया दृष्टिः। कस्मात् ? प्रकृतिपुरुषसंयोगभूतं खलु भागवतं स्वरूपमतः प्रकृतिपरस्थं देश-कालातीतं कैवल्यपदं न भगवदाश्रयम् भवितुमर्हति ।

एवं सत्यपि साधनविषये बहूनि सारगर्भाणि वचांस्यत्र वर्तन्ते, अतः साधनाभ्यासदृष्ट्या प्रकरणमिदमुत्तमम् । अन्येष्वपि पुराणेषु सांख्ययोगवर्णन-मीषद्दोषग्रस्तमवलोक्यते । यतो हि पुराणानि न दर्शनग्रन्थाः, अतो न तानि आन्वीक्षिकीपद्धत्या रचितानि। लोकानुरञ्जन-पराणि तानि। अतः न पुराणगतानां सर्वेषां सांख्ययोग-प्रतिपादकानां वाक्यानां समानं प्रामाण्यम् । सर्वत्र मूलभूत-सांख्ययोगदृशा पुराणवचनानि परीक्ष्याणि, ततश्च ग्राह्याणीति ।

दोषोऽयं मन्वादिप्राचीनस्मृतिषु धर्मसूत्रादिषु च प्रायेण नास्त्येव । एषु ग्रन्थेषु क्वचिदेव लोकानुरञ्जनार्थमतिरञ्जनं दृश्यते, क्वचिदेव च अर्थवाद-गन्धयुक्तं सत्यार्थकथनम् ।

अत्रेदमपि विज्ञेयं यत् सांख्ययोगविद्यायाः प्राचीना मूलभूता ग्रन्था नष्टा एव, एनां विद्यामाश्रित्य पुराणादयः अन्यानि दर्शनानि वैद्यकादीनि च प्रवृत्तानि । मानसशारीरशक्तिह्रासाच्च मोक्षविद्यायां बहवोऽन्धविश्वासा जाताः, कुसंस्काराश्च समागताः। अत एव सर्वेषु शास्त्रेषु यत् सांख्ययोगवर्णनमुपलभ्यते, तत् सर्वथा सारमेवेति न चिन्तनीयम्। यथा पौराणिकैः तथा शङ्करादिदार्शनिकै-रपि विकृतानि सांख्यमतानि प्रायेण प्रदर्शितानि । आयुर्वेदादिषु च यत् सांख्यमतवर्णनं तत् तत्तच्छास्त्रानुसारिदृशा कृतमिति विज्ञायते, अत एव स्थूल-दृष्ट्यैव तत्र सांख्यमतमुपन्यस्तं, न पुनरसंकीर्णया सांख्यसम्मतया दृष्ट्या ।

अतश्च 'वैद्यकशास्त्रे विजातीयं किमपि सांख्यमस्ति' इति यदाधुनिकगवेषकाणां लपनं, तत् प्रलपनमेवेति ( H.I.P. पृ. २१२–२१७ )। मूलभूतदृष्टौ समानायां सत्यामपि अवान्तरदृष्टिभेदतो मतपार्थक्यं जायत एव, एतादृशेन मतभेदेन न प्रस्थानपार्थक्यं भवति, यथा खलु अदर्शनसम्बन्धिमतभेदैः ( द्र० योगभाष्यम् २।२३ ) न सांख्यशास्त्रं तत्त्वतो भिद्यते ।

अथ सांख्यग्रन्थगतस्य दुष्टस्य मतस्योदाहरणमत्र दीयते । सांख्यसप्तत्यां लिङ्गशरीरविषयेऽस्ति कारिका—"चित्रं ...... तद्वद् विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्' ( ४१ कारिका ) । अत्र कैश्चिद् मन्यते यदविशेषैः तन्मात्रैर्विना लिङ्गशरीरं न स्थातुमुत्सहते । नेदं कथनं समीचीनम्, यतो हि सप्तत्यां प्रागेव तन्मात्राणि लिङ्गशरीरेऽन्तर्भुक्तानि कृतानि ( द्र० ४० कारिका— महदादिसूक्ष्मभूतपर्यन्तं लिङ्गं संसरतीति वाक्यम् ), अत एवात्र विशेषैति पदच्छेदः करणीयः । विशेषश्चात्र सुखदुःखबोधयुतोपभोगशरीरस्योपादानम्, तच्च घटाद्यपेक्षया सूक्ष्मम् । न चेदं शरीरं ( यत् स्थूलशरीरत्यागान्तरं गृह्यते जीवेन ) तान्मात्रिकं, सुखाद्युपभोगदर्शनात् तत्र। अत एव तद् विशेषधर्मयुक्तम्। अविशेषतन्मात्रमयम् तदिति यत् भिक्षु-भावागणेशादिभिरुक्तम्, तदनया युक्त्या प्रत्युक्तमिति[1] ।

क्वचिच्च ग्रन्थेषु अशुद्धं विवरणमेवोपन्यस्तम्, बहिरङ्गविषयेषु । यथा योगभाष्यगतं भुवनकोशवर्णनम्। नूनमादौ केनचिद् योगिनेदं ब्रह्माण्ड-संस्थानं प्रत्यक्षीकृतम्, ततश्च तदुक्तं विवरणं कण्ठपरम्परया प्रचारितं यथाकालम् । एतादृशो जटिलो विषयो यदि लोकपरम्परायां प्रचलितः स्यात्, तर्हि कालान्तरे तस्य विकृतिरपि स्यादेव । यथाश्रुतमविशुद्धमिदं विवरणं भाष्यकृता योगभाष्ये ( ३।२६ ) उपनिबद्धम् । चरमयोगसिद्धकृतग्रन्थाभावात् साधककृतग्रन्थदर्शनाच्च सांख्ययोगग्रन्थेषु क्वचिदीदृशा विषया असम्यग्रूपेण उपन्यस्ता इति वेदितव्यम् ( द्र० कापिलाश्रमीयपातञ्जलयोगदर्शनम् ३।२६ )। स्मृत्यादिगतं स्वर्गनरकादिविवरणमपि अतिरञ्जितवर्णनभूयिष्ठमिति स्वीकरणीयम् ।

---

१. स्थूलविशेषात्मकशरीरत्यागानन्तरं यत् शरीरं नारकादिभोगार्थं जीवो गृह्णाति, तत् शरीरमपि विशेषोपादानकम्, न पुनस्तान्मात्रिकमिति । स्थूलशरीरविशेष एव तत् शरीरमतः केचनाचार्याः एतादृशमन्तराभवदेहं पृथग्रूपेण नेच्छन्ति । लिङ्गशरीरं न विशेषयुक्तम्, परन्तु विशेषशरीरमन्तरेण न तत् कार्यक्षमं भवति, अतः ब्रह्माण्डेऽभिव्यक्तं तत् सदैव विशेषयुक्तं भूत्वा पुरुषार्थं साधयति ।

**सांख्ययोगीयमतभेदरहस्यम्**—अध्यात्मयोगविद्येयमेवं न्यायदृढा प्रयोगपरीक्षणादिभिश्चोपपत्तिभिश्च युक्ता यथा मूलपदार्थविषयको मतविरोधो न कदापि भवितुमर्हति । द्रष्टारं दृश्यं सत्कार्यवादं योगजप्रज्ञां चाश्रित्य प्रवर्तितेयं विद्येति प्रागुपपादितम् । दृश्यादीनां तात्त्विकं स्वरूपं ये जानीयुस्ते कदापि न परस्परविरुद्धमतप्रवादिनो भवेयुरिति न्याय्या दृष्टिः । एवं सत्यपि दृष्टिभेदतः, वर्गीकरणप्रक्रियाभेदतः, विश्लेषणप्रकारभेदतः, स्थैर्यस्तरभेदजनितज्ञानभेदतश्च मतभेदा भूयांसोऽवलोक्यन्ते तत्तदाचार्यप्रणीतग्रन्थेषु[१] । मतभेदमात्रेण न मतविरोधो भवतीति विज्ञेयम् । तदेतदुदाहरणैरुपपाद्यते—

१—महतोऽहंकारः, ततश्च तन्मात्राणि, इत्येव सम्प्रदायाभ्युपगतं मतम् । क्वचिच्च महतस्तन्मात्राणां सृष्टिरिति कथितम्, यथोक्तं योगभाष्ये—"षडविशेषाः ......षष्ठश्चाविशेषोऽस्मितामात्र इति । एते सत्तामात्रस्यात्मनो महतः षडविशेषपरिणामाः" ( २।१९ ) इति । अत्र सांख्ययोगयोर्मतभेदोऽयमिति आधुनिकाः केचन । वस्तुतस्तु भाष्यकारस्यायमाशयो यल्लिङ्गमात्रं खलु षण्णामविशिष्टलिङ्गानां कारणम् । सर्वान् अविशेषानेकजातौ संकलय्य तत्कारणत्वेन लिङ्गमात्रमुदाहृतम् । अविशेषेषु अपि कार्यकारणक्रमोऽस्तीत्यत्र न विभज्योक्तम् । न खलु महत्तत्त्वं गन्धतन्मात्रस्य साक्षादुपादानं भवितुमर्हति, किन्तु परम्परयैव; अत एव भाष्यकारः १।४५ भाष्ये तन्मात्रकारणत्वेनाहङ्कारं तस्यापि कारणत्वेन महत्तत्त्वं च स्वीचकार ( द्र० कपिलाश्रमीय-पातञ्जलयोगदर्शनम् २।१९ ) ।

२. तथैव क्वचिद् दूरसंबन्धतोऽपि शब्दाः प्रयुज्यन्ते । उपस्थस्य कार्यमानन्द इति सांख्ययोगग्रन्थेषु दृश्यते, तच्चासमीचीनम् । प्रजननमेवोपस्थकार्यम् (सां० का० २८ गौडपाद-टीका), औपस्थिकया क्रियया सह सुखाभिव्यक्तेर्बहुलसाहचर्यदर्शनादेवमुक्तमित्येव प्रत्येतव्यम्; प्रत्यक्षन्यायानुगृहीतोऽयं पन्थाः ।

---

१. यथाह शंकरः—"परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः, क्वचित् सप्तेन्द्रियाण्यनुक्रामन्ति, क्वचिदेकादश । तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति, क्वचिदहङ्कारात्, तथा क्वचित् त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकमिति" ( शारीरक० २।२।१० ) । सोऽयं मतभेदो न विरोधो वास्तवः, प्रत्युत वर्गीकरणप्रक्रियाभेद एव । साधनोत्कर्षप्रकर्षजनित-दृष्टिभेदेनापि एतादृशो मतभेदो भवितुमर्हत्येकस्मिन्नेव दर्शनशास्त्रे । अत एव साधनभेदादेव क्वचिद् विवेकः प्रकृतिपुरुषान्यताप्रत्ययरूप इति, क्वचिच्च सत्त्वपुरुषान्यताख्यातिरूप इति चोच्यते । नात्र कश्चिद् विरोध इति योगविदो विदुः ।

३. तथैव क्वचिद् आंशिकं कार्यादिकमेव उक्तं न कृत्स्नम्, यथा—पाणिकार्यम् 'आदानम्' इति कथ्यते ( सां० का० २८ )। आदानं यथा पाणिकार्यम्, तथा दानमपि पाणिकार्यमिति प्रत्यक्षसिद्धम्। तस्मात् शिल्पमेव पाणिकार्यमित्येव सुवचम्। तथैव विष्णुपुराणादिषूक्तमपि दृश्यते ( १।२।४५ )। आदानग्रहणं पुनरुपलक्षणार्थमित्येव मन्तव्यम्। अत एव यदि कश्चिद् दानादाने पाणिकार्यमिति ब्रूयात्, न तत्र मतभेदगन्धः कल्पनीयः[१]।

४. तथैव अध्यवसायलक्षणा बुद्धिः, सा च महानिति उच्यते; क्वचित् पुनः 'बुद्धिरध्यवसायेन ज्ञानेन च महांस्तथा' इत्युच्यते। अत्रापि न मतविरोधः शङ्कनीयः। आहुश्चात्र हरिहरानन्दचरणाः—"सर्वे प्रत्यया बुद्धिरित्यभिधीयन्ते, महानात्मा पुनरात्मविषया शुद्धा बुद्धिरिति विवेच्यम्" इति ( सांख्यतत्त्वालोकः, १५ प्रकरणम् )। वायौ "संकल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम्" (४।४६) इत्युक्तम्, अत्रापि न मतविरोध इति गुरुपरम्परातोऽवगन्तव्यम्।

५. एवमेव क्वचित् सात्त्विको महानित्येवोक्तम्। क्वचिच्च सात्त्विक-राजस-तामस-भेदात् त्रिधेति कथ्यते ( विष्णु० १।२।३४ )। सर्वं त्रैगुणिकम्, चलं च गुणवृत्तमिति न्यायेन दृष्टिभेदमाश्रित्य एतादृशा अवान्तरमतभेदा उपजायन्त एव। न च तैर्मतविरोधो भवतीति ज्ञेयम्।

**सांख्ययोगानभिज्ञकर्तृकसांख्ययोगमतप्रदर्शनम्**—अतिदुरवधारणा खल्वियं विद्या। विशुद्धा प्रज्ञा, न्यायानुसारिणी धीः, वीर्यस्मृत्यादिगुणाश्चात्रापेक्ष्यन्ते। असूक्ष्मप्रज्ञैर्दार्शनिकैरत एव सांख्ययोगौ न सम्यग्ज्ञातौ। अज्ञात्वाऽपि ते सांख्ययोगमतानि प्रदर्शयन्ति। अतो बहुत्र सांख्ययोगमतप्रदर्शने तैर्यदुक्तं तन्मिथ्येति दृश्यते। तथा हि—

१. जैनविद्वान् हरिभद्रसूरिराह—"सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः" इति (षड्दर्शनसमुच्चयः, ३५ श्लो०) तथैव भास्कररायोऽपि "मीमांसाशास्त्रं सांख्यशास्त्रं च द्विविधं-सेश्वरं निरीश्वरं च" इति उक्तवान् ( ललितासहस्रनामभाष्यम् पृ० ६३ )। ईश्वरता खलु बुद्धिरूपेषु अन्यतमा, सर्वज्ञता—

---

१. आंशिकं लक्षणं दृष्ट्वा लक्षणान्तरमनुमेयं भवति। सांख्यसूत्रे व्यक्तलक्षणं प्रदत्तम्—"हेतुमदनित्यमनेकम्……" ( १।१२४ ) इति। नात्र 'अव्यापि' इति पदमस्ति; परन्तु यदि कश्चिद् ब्रूयात्—सूत्रमते व्यक्तं व्यापि भवति, सांख्यसप्ततिमते ( १० कारिका ) तु अव्यापि, यतो हि सूत्रे अव्यापीति न प्रयुक्तम्; तर्हि स अज्ञ इत्येव मन्तव्यम्, हेतुमदादिलक्षणैरव्यापित्वस्यापि साधितत्वाद् इति। अत एवात्र न कश्चिद् विरोध उद्भावनीयः।

सर्वशक्तिमत्त्वादयोऽपि सांख्ययोगशास्त्रसिद्धाः; अतो निरीश्वरं सांख्यमिति कथनं सर्वथा दुरुपपादमेव । विषयोऽयं सांख्यविद्याग्रन्थे विस्तरेण प्रतिपादितः ।

२. तथैव गुणरत्नसूरिकृते षड्दर्शनसमुच्चय उक्तम्—"मौलिक्यसांख्या हि आत्मानमात्मानं प्रति पृथक् प्रधानं वदन्ति, उत्तरे तु सांख्याः सर्वात्मसु अप्येकं नित्यं प्रधानम् इति प्रपन्नाः" ( द्र० ३६ कारिकाव्याख्या ) । तदिदं कथनं सर्वथा हेयमेव । प्रधानस्वभावविषये यानि स्वरूपगर्भाणि विशेषणानि सांख्यसप्तत्यां योगभाष्ये शान्तिपर्वणि (२१७ अ०) च प्रदत्तानि, तत इदं गम्यते यत् प्रधानमेकमेव । न्यायानुसारिणी चिन्ता यदि क्रियते तर्हि प्रधानस्यैकत्वमेव सिद्धं भवति । मन्ये सांख्यविद्यामज्ञात्वैव सूरिरित्थं कथितवान् । अत्र कैश्चिदुच्यते यद् मतमिदम् एकदेशिसांख्यमतमिति ( द्र० युक्तिदीपिका ५६ कारिकास्था ) तदस्मभ्यं न रोचते न्यायविरोधात् । सोऽयं विषयः सांख्यविद्याग्रन्थे विवृत इति विरम्यते ।

सांख्ययोगविद्याविप्रतीपदृष्टयः—अशक्त्याऽज्ञानतो वा यथा यथा विपर्यया उत्पद्यन्ते, तथा तथा मोक्षविद्यायां कुदृष्टयोऽपि जायन्ते, तत एव मिथ्यादर्शनसंवलितदर्शनान्तराणामुत्पत्तिर्भवतीति न्यायानुगतं वचः । अत एव मोक्षदर्शनान्तरेषु यद्यपि सांख्ययोगविद्याऽस्ति, तथापि तेषु सांख्यज्ञानविलक्षणानि मतान्यपि विद्यन्ते । तत्-तत्-सम्प्रदायगताचार्याणामशक्तिः, दृष्टिदोषः, मोहो वा तेषां कारणमिति ब्रूमहे । अध्यात्मयोगविद्या यैश्च बाह्यैर्हेतुभिरपि विपर्यस्ता भवति, तेऽपि यथास्थानं विवृताः । तत्-तदागमोद्देशकाले ते ते दोषा यथायथम् उपजाता इत्यस्माभिरनुमीयते ।

सांख्ययोगविलक्षणानि कानिचिन्मतान्यत्र उदाह्रियन्ते[१]—

| असंकीर्णसांख्ययोगदृष्टिः | विपर्यस्तदृष्टयः |
| --- | --- |
| १. पुरुषः खलु चिद्रूप ऐश्वर्यशून्यः स्वरूपतः, ऐश्वर्यं तु अन्तःकरणधर्मः, अतस्तत् प्राकृतमेव प्रकाशक्रियास्थितिधर्मकत्वात् । तच्च हेयमेव, तत् प्रति वैराग्यात् कैवल्यं भवति । | चिद्रूपोऽपि ऐश्वर्ययुक्त इति शैवागमिनः । रामानुजादयश्च कल्याणगुणयुक्तं परमतत्त्वं वर्णयन्ति । |
| २. ईश्वरतायुक्तान्तःकरणविशिष्टः | नित्य ईश्वरः सृष्टिं करोतीति |

[१] प्रघट्टकोऽयमतिसंक्षेपेण लिख्यते । अस्मत्प्रणीते 'सांख्यविद्या' नामधेये ग्रन्थे इमे विषयाः स्फुटीकृताः ।

सार्वज्ञ्य-सर्वशक्तियुतः अविद्यायुक् पुरुष-विशेषः खलु सृष्टिकर्ता । विवेकबलेन प्रलयानन्तरं स कैवल्यमधिगच्छति, अतः ईश्वरताधर्मोऽनित्यः । न खलु कश्चित् नित्यः ब्रह्माण्डसर्जकोऽस्ति ।

रामानुजादयः। वेदान्तवादिनोऽपि केचनेत्थं वदन्ति ।

३. यतो हि ब्रह्माण्डं व्यक्तमतस्तत् परिच्छिन्नम्, अतोऽसंख्येयानि ब्रह्माण्डानि, मूलकारणस्यापरिमेयत्वात्। अत एव अनेक-ब्रह्माण्डेषु एकस्य ईश्वरस्य नेशनशक्तिः प्रवर्तते, अव्यक्तान्तरितत्वाद् ब्रह्माण्डानाम्।

एक ईश्वरोऽनेकब्रह्माण्डेषु आ-धिपत्यं करोति, अत एव सः 'अनन्त-कोटिब्रह्माण्डनायकः' इत्युच्यते, इति वैष्णवादयः ।

४. सृष्टिकर्तुः प्रजापतेर्ग्राह्यभूतं भूताद्यभिमानमेव जगदुपादानं साक्षात्, तन्मनोगतः संकल्पः ऐश्वर्यसंस्कारश्च निमित्तं जगदभिव्यक्तेः, अत एव 'यथो-र्णनाभिः सृजते गृह्णते चे'त्यादि श्रुतिराह ( मुण्डक १।१।७ ) ।

ईश्वरः खलु निमित्तकारणम् इति नैयायिकाः ।

५. व्यवहारत ऐशान्तःकरणस्य जग-न्मूलत्वेऽपि तत्त्वतः तदन्तःकरणमपि त्रैगुणिकमिति कृत्वा प्रधानप्रकृतिकं जग-दिति तात्त्विकी दृष्टिः सिध्यति । मूलं निमित्तं तु पुरुषो व्यक्तावस्थायाः । गौणानि निमित्तान्यपि सन्ति भूततन्मात्रा-दीनाम् ।

जगदुपादनभूतमैशचित्तं ( मा-यालक्षणे स्वचित्ते—इत्यद्वैतिभि-रुच्यते ) न पुनर्विश्लेषयोग्यमिति ईश्वर एव जगदुपादानमिति केचन वेदान्तनिष्ठाः ।

६. परमार्थसिद्धौ दैशिकी कालिकी वा प्रतीतिर्न भवेत् । अत एव चिद्रूप-तायां न सर्वव्यापिताभावः। ततश्च केवली पुरुषो न वैकुण्ठादिलोकस्थो भवितु-मर्हति । कैवल्यपदं न देशकालव्याप्ति-युतम्, तच्च लोकातीतम् । कैवल्या-वस्थायां च न देहादयः सन्ति ।

अप्राकृतेषु वैकुण्ठादिस्थानेषु जीवानां स्थितिर्भवति परमार्थ-सिद्धौ इति केचन भक्ताः । सिद्ध-देह—अप्राकृतदेहवन्तश्च तत्र राज-न्ते नित्यम्, इत्यस्ति मतं वैष्णवा-दिषु 'सन्त'-परम्परासु च ।

७. स्वरूपेणावस्थानकाले देशकाल-व्यापित्वाभावाद्, बुद्धिनिरोधे सति शरूपेण

एकमेव ब्रह्म बहुजीवभाव-मापन्नं नैकशरीरेषु वर्तते । शिव

अवस्थानदर्शनाद्, बहुबुद्धिदर्शनाच्च सर्वतस्तुल्या बहवः पुरुषा इति स्वीकार्यम्; अखण्डैकरूपं चैतन्यं न बहुबुद्धिजनकं स्यात्।

८. निरोधसमाध्यवस्थायां चित्तेन्द्रियाणां प्रविलयात्, सविप्लवे निरोधे च तेषां पुनर्व्यक्ततासिदर्शनात् सद्रूपमव्यक्तम्। सिद्धे च परमार्थेऽव्यक्ततानतिक्रान्तेरसद्रूपेव प्रकृतिः, 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति नियमात्। सर्वोपादानं चाव्यक्तम्, त्रैगुणिकत्वात् सर्वस्य।

९. परमतत्त्वं सगुणनिर्गुणात्मकं न भवितुमर्हति, निर्विकारं वस्तु विकारबीजमिति न न्यायेन संगमनीयम्।

१०. सर्वमिदं कारणकार्यनियमानुसारेण प्रवर्तते, अहेतुकस्वातन्त्र्यशक्तिर्नाम न कश्चित् पदार्थो भवितुमर्हति। कर्मानादि, कर्मसंस्कारश्च। प्रजापतेरैश्वर्यसंस्काराद् ब्रह्माण्डाभिव्यक्तौ सत्यां पूर्वसंस्कारानुसारेण स्वतः पुरुषार्थाचरणक्रिया प्रवर्तते जीवानाम्। दुःखादिदर्शनाद् यदि स्वेच्छया कश्चिद् आवृत्तचक्षुः स्यात्, तर्हि आत्मज्ञानाभ्यासेन यथाविधि कैवल्यभाक् स्यात्; न खलु कैवल्यमीश्वरेच्छयैव लभ्यम्।

एव गृहीतपशुभाव इति केचन शैवागमिनश्च।

असद्रूपा जगदुपादानभूता प्रकृतिरिति केचित्। तथैव केचिज् जगन्मूलं शून्यमाहुः। अपरे च निरन्वयमेवेदं सर्वमिति। अपरे पुनः नास्ति कारणे कार्यमव्यक्तभावेनेति।

अपरिणामिनस्तत्त्वाद् विकारशीलं जगज्जायत इति केचनागमिनः। सगुणं निर्गुणं च युगपत् परमतत्त्वमिति शैवादयः।

स्वतन्त्रेच्छः खलु परमेश्वरः। कालत एव जीवानां मुक्तिर्भवति। ईश्वरेच्छयैव गुरुकृपयैव वा कैवल्यं भवतीत्यन्ये।

१३. सांख्ययोगं प्रति आक्षेपाः, तेषां समाधानं च—सांख्ययोगं प्रति अज्ञतामूला आक्षेपाः आचार्यैर्बहुधा कृताः, येषां समाधानमन्यत्र कृतमस्माभिः। दिङ्मात्रमिहोदाह्रियते—

( १ ) योगप्रामाण्यवादी ( द्र० शारीरक १।३।३३ ) शंकरो योगशास्त्रसिद्धं तप्यतापकभावं महताडम्बरेण प्रत्याख्यानाय प्रायतिष्ट। परन्तु शंकरेण

स्वसिद्धान्तरूपेण यत् स्वीकृतम्—'अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिकः' (शारीरक २।२।१०) इति, तत् तु सांख्यदर्शनानुगृहीतमेव। तदेतद् योगभाष्ये ( २।१७ ) विवृतम्, अतः प्रतीयते यत् शंकरेण न योगविद्याऽवबुद्धेति। सत्त्वतप्यत्वमेव पुरुषतप्यत्वमिति सांख्याचार्याः, ( द्र० भोजवृत्ति ४।२३ गतं विन्ध्यवासिमतम् ) अतो न कश्चिद् दोषः सांख्यपक्षे वर्तते।

( २ ) तथैव २।२।६ शारीरकभाष्ये सांख्ययोगसंमतपुरुषार्थविषयेऽपि शंकरेण दोषा आविष्कृताः। शंकरवाक्यतः प्रतीयते यत् सोऽनधीती योगशास्त्रे आसीत्। यतो हि भोगापवर्गौ बुद्धिकृतौ द्वावर्थौ पुरुषे समारोप्येते, दृश्यं च भोगापवर्गार्थम्, पुरुषार्थ एव दृश्यस्यात्मा, स्व-पर-रूपख्यापनायैव प्रधानप्रवृत्तिरतः शंकरोक्तानि दूषणानि खपुष्पायमाणानीति।

( ३ ) योगशास्त्रसम्मतानां महदादीनामवैदिकत्वं प्रतिपादयन्ति बहव उत्तरमीमांसाव्याख्यातारः ( द्र० २।१।२ ब्र० सू० )। सेयं दृष्टिर्न संगता, प्रधानादीनां श्रुतिषु स्पष्टमुपलब्धेः। काठके, मुण्डके श्वेताश्वतरे, मैत्रायण्युपनिषदि, प्रश्नोपनिषदि, नारायणोपनिषदि, कौषीतक्युपनिषदि, गर्भोपनिषदि च शब्दतोऽर्थतश्च सांख्ययोगीयाः पदार्था वर्णिता दृश्यन्ते। ईश-केनादिष्वपि अर्थतः सांख्यीया दृष्टिर्देदीप्यते—'ईशावास्यमिदं सर्वमिति', 'संभूतिं च विनाशं चेति', 'प्रतिबोधविदितं मतमिति' च। या चोपासना छान्दोग्येऽस्ति सा योगानुगतैव। आत्मविषये याश्चोपपत्तयो दर्शिता बृहदारण्यके, ताः सर्वा अपि सांख्यीयं तत्त्वदर्शनमेव ज्ञापयन्ति, न मायावादमारम्भवादं वा। शंकरादिभ्यो वेदान्तभाष्यकारादिभ्यो ये प्राचीना आचार्या हारीत-पराशर-देवलादयः, ते उपनिषद्गतैः शब्दैः सांख्ययोगसिद्धान्तार्थान् एव बुबुधिरे, न शंकरादि-सम्मतानर्थान्[1]। मनुयाज्ञवल्क्यादयोऽपि वेदार्थस्मरणं कृत्वा यानि मोक्षविद्यासम्बन्धीनि मतान्युक्तवन्तः, तेष्वपि सर्वत्र सांख्ययोगानुसारिणी दृष्टिरेवावलोक्यते। अत एव शंकरादयः स्वदृष्ट्या अतात्त्विकदर्शनयुक्तया वेदार्थं व्याचक्षाणाः प्रायेण न वेदमतानि तर्केण उपपादयन्ति, न वा तेषु कार्यकारणपरम्परां प्रदर्शयन्ति; केवलं काशकुशावलम्बनेन वेदार्थान् कुर्वन्ति, न च तानर्थान् न्यायेन संगमयन्ति। न हि व्याख्यानकौशलं नाम किमपि शास्त्रमस्ति—इति सांख्ययोगाचार्याणां दर्शनम्।

( ४ ) योगे खलु 'पुरुषः भोक्ता' इत्युच्यते—'अपरिणामिनी हि भोक्तृशक्तिः' इत्यादि पञ्चशिखवचनमत्र द्रष्टव्यम् (द्र० योगभाष्यम् २।२०; ४।२२)।

---

१. अस्य मतस्य प्रमाणीकरणं योगविद्या-ग्रन्थे द्रष्टव्यम्।

यदि पुरुषो भोक्ता स्यात् तर्हि स विकारी स्यादिति केचन लपन्ति । एते खलु भोगस्वरूपमज्ञात्वैव योगपक्षं दूषयन्ति । भोगो नाम सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषः, दृश्यस्योपलब्धिर्वा; यः खलु अस्य ज्ञानस्याविकारी द्रष्टा स एव पुरुषो भोक्तेति, अतः स न विकारी भवितुमर्हति ।

( ५ ) योगसम्मतः सत्कार्यवादश्चाज्ञैर्बहुधा दूषितः । सांख्ययोगीया दृष्टिः खलु ३।१३ व्यासभाष्ये विवृता, तामज्ञात्वैव—

'यदेव दधि तत् क्षीरं यत् क्षीरं तद् दधीति च ।
वदता रुद्रिलेनैव ख्यापिता विन्ध्यवासिता ॥'

इत्युक्तम्[१] । अयं दृष्टान्तो न योगपक्षं खण्डयितुं समर्थ इति वाचस्पतिर्दर्शितवान् ( द्र० ३।१३ तत्त्ववैशारदी ) ।

( ६ ) दृग्दर्शनशक्त्योरेकात्मता याऽनुभूयते, स सम्बन्धश्च पुरुषप्रकृत्योः भोक्तृभोग्य योर्योग्यतालक्षण इति । आह च पतञ्जलिः—"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" इति ( २।६ ) । अत्राह वाचस्पतिः—"दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोर्योग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिग्रहणमि"ति। यदि नाम योग्यतालक्षणः संबन्धः स्यात् तर्हि स शाश्वतिकः स्यात् । एवमनिर्मोक्षप्रसंग इति केचिद् वदन्ति । आह च शंकरः—"योग्यतानिमित्ते च संबन्धे योग्यतानुच्छेदाद् अनिर्मोक्षप्रसङ्गः" इति ( शारीरक २।२।७ ) ।

अयमाक्षेपोऽसमीचीनः, यतो हि विद्याविद्ये च क्षयोदयशालिवृत्तिरूपेणान्तःकरणे तिष्ठतः । योगाभ्यासेन अविद्या क्षीणा भवति, विवेकख्यातिश्च विवर्धमाना भवति । ततश्च तस्याः ख्यातेरपि निरोधो भवति । यतो हि वृत्तिः क्षयोदयशालिनी, अतः संयोगोऽपि सविप्लवः । या च वृत्तेर्लयावस्था सैव स्वरूपावस्थानं द्रष्टुः । चित्तं खलु संस्कारप्रत्ययधर्मकम् । उभावेतौ धर्मौ भङ्गुरौ, अतश्च चित्तं स्वकारणे लीनं भवितुमर्हति । निरोधसमाध्यभ्यासाद् यदा चित्तस्य पुनरुत्थानहीनो लयो भवति, तदा पुरुषस्य कैवल्यम् ।

( ७ ) जैनसंप्रदायेऽपि पातञ्जलयोगविद्यां प्रति केचन आक्षेपाः कृताः (द्र० यशोविजयोपाध्यायकृता योगसूत्रवृत्तिः ) । बुद्धचरितकाव्ये ( द्वादशसर्गे ) अश्वघोषेणापि सांख्ययोगविद्यायां दोषाः प्रदर्शिताः । बोधिचर्यावतारगतनवमपरिच्छेदेऽपि ( तट्टीकायां च ) सांख्ययोगपक्षो दूषितः । न्यायभाष्ये ( १।२।६ ) योगभाष्यगतमेकं मतम् ( तदेतत् त्रैलोक्यं व्यक्तेरपैति""""३।१३ ) दूषितम्,

---

१. द्र० तत्त्वसंग्रहपञ्जिका, पृ० २२ ।

विरुद्धहेत्वाभासस्योदाहरणमेतदिति कृत्वा ।[1] अध्यात्मविद्यासम्मतदृष्टिमविज्ञायैवेमानि सर्वाणि दूषणानि प्रदत्तानीति अस्माकं पक्षः । सोऽयं विषयो 'योगविद्या'-ग्रन्थे विस्तरेण विवृत इत्युरम्यते ।

सांख्ययोगविद्याह्रासकारणम्—सन्ति बहवो हेतवः, यतो शनैः शनैः विद्येयं ह्रासं गता। आन्वीक्षिकी-प्रधानाया अस्या विद्याया विकृतिक्रमानुसारेण दर्शनान्तराणि यथाकालं प्रजातानीति विज्ञायते । अत एव सर्वाणि प्रस्थानानि मूलतः सांख्ययोगाश्रितानीत्यस्माकं मतम् । यथा यथाऽर्वाग्दर्शिभिरसंकीर्णतत्त्वदर्शनं विपर्यस्तरूपेण ज्ञातम्, तथा तथा एकैकमज्ञानमाश्रित्य अर्वाक्कालिकं नवीनं दर्शनमुत्पन्नम् । मनुरपि वेदबाह्यानां तमोनिष्ठानां कुदृष्टीनामर्वाक्कालिकत्वं कथितवान् ( १०।९५–९६ ) । अध्यात्मविद्या–विपर्ययकारका हेतव इमे—

१—पार्थिवान्न जलादिगुणाद्यपकर्षः, ततश्चाहाराशुद्धि-प्राबल्यम्, ततश्च सत्त्वशुद्धेरपि ह्रासः ।

२—शरीरधातुशक्तीनामपकर्षः, येनैकाग्र्यहेतुभूतशारीरस्थैर्यापकर्षः, ततश्च समाहितचित्तताया ह्रासः[2] ।

३—मानसबलापकर्षः, ततश्च वैराग्यादिसिद्धौ अशक्तिः, परिग्रहादिषु लौल्याच्च चित्तस्थैर्यह्रासः ।

४—शिक्षा-जीविका-दायभागादिविधिषु उच्छृङ्खलदृष्टेरनुप्रवेशः, ततश्च यमनियमाभ्यासेऽपटुता संजाता, सा चेदानीं विवर्धमाना दृश्यते ।

---

१. न्यायभाष्यगतमिदं दोषप्रदर्शनं खलु न्यायसम्मतारम्भवादमाश्रित्यैव कृतम् । अत एव पारिभाषिकप्रक्रियाजन्यमिदं दोषदर्शनमित्यतो न वास्तवः कश्चिद् दोषो विद्यते योगभाष्यवाक्ये इति स्वीकार्यमेव ।

२. एतत् कारणकथनं न स्वमनीषा-प्रभवम् । न्यायकुसुमाञ्जल्याम् ( २।३ ) 'जन्मसंस्कारविद्यादेः' इति कारिकायामपि इत्थमेव विचारितम् । आह च पराशरः-"पुरा खलु अपरिमितशक्तिप्रभाप्रभाववीर्यं ...... धर्मसत्त्वशुद्धतेजसः पुरुषा बभूवुः ......' इत्यादि । ( उत्पलकृतबृहत्संहिताटीकायामुद्धृतमिदं वचः ) । मन्वादिभिरपि मतमिदं कथितम्, अत एवास्माभिरुच्यते यत् कपिलपञ्चशिखपतञ्जल्यादिभिर्यद् मोक्षदर्शनमुक्तं तदेव समीचीनम्, क्षीणबलैः तमोगुणाधिक्ययुक्तसमाजस्थितैराचार्यैः पुनर्यदुक्तं तद् कलिमलयुक्तमिति । शंकर-रामानुजाभिनवगुप्तादीनां समये चित्तस्थैर्यहेतुभूतसाधनानि प्रायेण भ्रष्टानि जातानीति निश्चप्रचम्; कपिलादिजन्मसमये न तथेति ।

५—तामसराजनीत्यनुसारेण जीवनयापनपद्धतेर्नियमनम्, अत एव स्थैर्याधायकसत्त्वगुणान्विताया मनोवृत्तेर्ह्रासः।

६—तत्त्वोपलब्धिकारिणामत्यल्पता, ततश्च विशेषप्रत्यक्षीकरणजातप्रज्ञावैशद्यस्यादर्शनम्, ततश्च योगाभ्यासेच्छाह्रासः।

७—अयोगिकर्तृकं कृत्रिमागमप्रणयनम्, ततश्च मोक्षविद्या सर्वतोभावेन आकुलीकृता सम्प्रदायान्धदृष्टिभिः।

८—निन्दाप्रशंसामूलकशास्त्रवचनानुसारेण आत्मविद्यासिद्धान्त–स्थिरीकरणम्, शब्दप्रमाणजनितं ज्ञानमेव तत्त्वविषयकं चरमं ज्ञानमिति धारणाया उद्भवश्च।

अत्रेदं विज्ञेयं यद्—आत्मज्ञानं न खलु व्यावहारिक-बाह्य-जीवनाद् असंबद्धम्; अत एव आत्मज्ञानाभ्यासिनां कृते व्यावहारिकजीवनस्य शुद्धिरप्यावश्यकी। सेयं शुद्धिर्ऋषिभिरध्यात्मचिन्तामाश्रित्य उत्सर्गापवादनियमेन धर्मसूत्रादिषु प्रोक्ता। आत्मविज्ञानसहभूरेव सदाचारः। अर्थशिक्षाजीविकादिशुद्धिम् अन्तरेण न चित्तशुद्धिर्भवतीति कृत्वा श्रौतेन आत्मज्ञानेन सह बाह्यशुद्धिरपि उपदिष्टा ऋषिभिः। अत एवात्मज्ञानप्रदर्शनकृदृषिः चित्तशुद्धिहेतुकसदाचारयुक्तजीविकादि-व्यवस्थानुशासनानि अभ्युपगम्यैव शास्त्रानुशासनं करोति—इति दृश्यते। येषु दार्शनिकप्रस्थानेषु बाह्यशुद्धिविषयकं विधिनिषेधजातं राष्ट्रसमाज-वर्णाश्रमादिव्यवस्थाहेतुभूतं नास्ति, तेषु अध्यात्मज्ञानविपर्ययोऽप्यस्ति—इति स्वीकरणीयम्, अत एव मन्वादिभिः आत्मज्ञानोपदेशात् प्राग् बाह्यशुद्धिकारिणी व्यवस्था बहुलमुपदिष्टा। आगमतन्त्रादिषु बौद्धादिशास्त्रेषु च बाह्यशुद्धिविषयकानुशासनाभावात् तानि खलु तन्त्रादीनि 'अपूर्णानि असाधकानि च शास्त्राणि', इति मन्तव्यम्। असंकीर्णात्मज्ञानवित् पञ्चशिखः यदा सांख्यसूत्रं प्रणिनाय, तदा राज्यादि व्यवस्थापि अध्यात्मज्ञानमूलिकासीदिति विज्ञायते। साम्प्रत्वे न तथा, अतोऽन्धविश्वासमूलं न्यायहीनं ज्ञानमेवाद्य मोक्षविद्यारूपेण प्रचलति।

अनुरागाधिक्यविशेषतो योगभेदानामुत्पत्तिः—विचित्राः खलु साधकानां रुचयः। यथा खलु केचिज् ज्ञाननिष्ठाः, केचिच्च कर्मनिष्ठाः संस्कारभेदतः, तथैव अध्यवसायभेदेन धर्मज्ञान-वैराग्यैश्वर्याणामन्यतमेष्वभिरताः सन्तो योगिनः कैवल्यार्थं यतमाना दृश्यन्ते। तत्र धर्माद्यनुसारेण चतुष्टयी गतिरपि शास्त्रे प्रसिद्धा, एवं योगाङ्गाभ्यासेऽपि योगाङ्गानामन्यतमेऽङ्गेऽनुरागाधिक्याद् बहवो योगभेदा जाताः। यद्यपीमे भेदा असंख्येया इति स्वीकार्यमेव, तथापि बाह्यरूपेण चतुर्धेति परम्परासु प्रसिद्धिरस्ति। यथोक्तम्—

मन्त्रयोगो लयश्चैव राजयोगो हठस्तथा ।
योगश्चतुर्विधः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः ॥

भेदोऽयं योगाङ्गाभ्यास-प्रवणताभेदादिति प्रतीयते ।

अत एव केचन शरीरशुद्धिबद्धादराः, अपरे च जपादिबद्धदृष्टय इति । एषां योगानां विवरणं योगविद्येतिहास-ग्रन्थे दास्यत इति तत एव विशेषो विज्ञेयः ।

तत्त्वदर्शनभेदादपि योगसंप्रदायभेदो भवति—इत्यभ्युपेयमेव । शैवाः, वीरशैवाः, पाशुपताः, नकुलीशपाशुपताः, प्रत्यभिज्ञादर्शनस्थिताः, भागवताः, पाञ्चरात्राश्च सर्वे योगविद्यांशविशेषे एव विराजन्ते—इत्यत्र न संशयलेशोऽपि; परन्तु तत्त्व-दर्शने क्वचिदेतेषां विपर्यस्ता दृष्टिरुपलभ्यते । एते खलु क्रियायोग-परायणा ईश्वरप्रणिधानरूपे योगाङ्गे बद्धादराः प्राणायामाद्यभ्यासशीला ध्यानविशेषं भावयन्तश्च यथाशक्ति सिद्धिं लभन्ते, परन्तु सम्यग्दर्शनाभावान्न गुणातीतं पदमधिगच्छन्ति, अतिसूक्ष्मरूपेण अविद्याबीजदेहात्माध्यासौ चैतेषु साधकेषु विद्येते ।[1]

**सांख्ययोगप्रभवाश्चान्या लौकिक्यो विद्याः**—यद्यपि त्रिगुण-सत्कार्यवाद-विवेकख्यात्यादयोऽध्यात्मदृशैवात्र शास्त्रे उपन्यस्ताः, तथापि लौकिक्या दृष्ट्या-ऽपि सांख्ययोगविद्या उपयोगिनी भवति । तथाहि—

( १ ) यदिह वैद्यकशास्त्रे वात-पित्त-कफरूप-त्रिदोषविचार आस्ते, स च त्रिगुणमूलक इति निश्चप्रचम् । औषधप्रयोगश्च गुणवैषम्यनियमानुसारेण यदि स्यात्, तर्हि सम्यक् फलजनकश्च स्यादिति । अत एव चरके सुश्रुते च सांख्य-ज्ञानप्रसङ्गो विद्यते । स च प्रसङ्गो वैद्यकदृष्ट्येति विज्ञेयम् ।

( २ ) योगशास्त्रे या षट्चक्रचिन्ता वर्तते, स्थूलदृशाऽपि यदि तदुपयोगः कृतः स्यात् तर्हि शारीरस्वास्थ्यवृद्धिः स्यादिति अस्माकं प्रत्यक्षम् । आसन-मुद्रादयः शरीरबलस्थैर्यविधायका अपि योगविद्यांशभूता एव । तस्य सम्यग्ज्ञानं तु कायव्यूहज्ञानतः स्यादेव ।

( ३ ) तथैव चित्तसंबन्धिरोगजातमपि योगविद्यागतसिद्धान्तप्रयोगैरपाकर-णीयं भवति । इदानीन्तना मनोविज्ञानविदः ( Psychologist ) यदि योगशास्त्रीयाणि मतानि मनोविषयीणि विज्ञाय मनश्चिकित्सां विदध्युस्तर्हि ते साफल्यभाजो भवेयुरिति । प्रचलितमनोविद्याशास्त्रगताः 'अनिर्ज्ञातमनः-अस्वा-भाविकमनः-दूरदर्शन-स्पर्शनविषयकाः' सिद्धान्ता अपि योगशास्त्रान्तर्गता एव।

---

१—शैवादिदर्शनेषु आन्वीक्षिकीदृष्ट्या ये दोषा वर्त्तन्ते, तेषां विवरणम् अस्माभिः 'योगविद्या'-नामधेये ग्रन्थे कृतमिति तत एवावधार्यास्ते दोषाः ।

( ४ ) तथैव जगन्मूलभूतं द्रव्यं खलु किंविधमिति दुःसाधा समस्या जडविज्ञानविदाम्। द्रव्यमिदं मनोजातीयमेव स्यादिति तेषां नवीना दृष्टिः[१]। सा खलु योगदर्शनानुमोदिता। अत एव मानसबलस्यैव प्राधान्यं योगे कीर्त्यते, मानसयोग्यता यथा विवर्धिता स्यात् तथा प्राणायामादीन्यनुष्ठीयन्ते ( द्र० योगसूत्रम् २।५३ )। आशास्महे वयं यदागामिनि काले बाह्यदर्शनसंपन्ना विद्वांसः स्वसिद्धान्तोपपत्तये योगविज्ञानस्य शरणमियुः। कथं नु विषयभूतमिदं बाह्यं वस्तु अध्यात्मभूतं चित्तं विपरिणमयति—इति न खलु कश्चिज् जडविज्ञानविद् व्याख्यातुं समर्थः। सेयं समस्या 'अभिमान-सिद्धान्त'बलेन अध्यात्मतत्त्वविद्भिः सुसमाहिता, यत्र बौद्धादयोऽपि मुह्यन्ति स्म ( कॉण्ट—हेगेलादयोऽपि तथैव )। जगतो मनोमात्रत्वम्, ततश्चास्य मायारूपत्वं च सांख्ययोगिनामन्यतमा प्रसिद्धा दृष्टिः, तस्यां चैकांशतो वैज्ञानिकानामनुप्रवेशो दृश्यत एव।

( ५ ) तथैव सत्कार्यवादोऽपि बाह्यदृशा पदार्थाविष्करणविषयेऽभ्युपगम्यते जडवैज्ञानिकैः। वैज्ञानिकानां सूक्ष्मतमाः सिद्धान्ताश्च सत्कार्यवादान्तर्गतपरिणामवादमेव पुष्णन्ति, नारम्भवादं विवर्तवादं वा। उपादानद्रव्ये कार्यमव्यक्तरूपेण तिष्ठति, सूक्ष्माणां कारणानां मूर्तिलाभ एव कार्यम्—इति दर्शनमाश्रित्यैव वैज्ञानिकैर्निर्मीयतेऽनुसन्धीयते च वस्तु नवीनं प्रत्यहम्; यश्च शक्तिपरिणामवादो वैज्ञानिकैरुररीक्रियते, स च योगानुमोदित एव।

( ६ ) व्यष्टिजीवनसुखार्थमपि शीलानामभ्यसनमावश्यकम्, शीलानि च यमनियमान्तर्गतान्येव। एतच्छीलाभ्यासपरायणैर्मुनिभिरेवादौ राष्ट्रविद्या, समाजविद्या चोपदिष्टा, यतः शिष्टाचारबहुलः समाजोऽभूत्, यमभिलक्ष्य 'धर्मयुग'-शब्दः प्रयुक्तो महाभारते। लौकिकसर्वकार्यसिद्धयेऽपि अध्यात्मज्ञानमपरिहार्यम्, यथाह मनुः—

'ध्यानिकं सर्वमेवैतद् यदेतदभिशब्दितम्।
न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते॥' इति। ( ६।८२ )

---

१. द्र० Essential Unity of All Religions ( पृ. १६–१६ )।

# द्वितीयं प्रकरणम्

## पातञ्जलयोगसूत्रम्, तद्व्याख्यानानि च

**योगसूत्रकारः**—योगसूत्रस्य प्रणेता खलु भगवान् पतञ्जलिरिति संप्रदायः[1]। स च दुरधिगमां योगविद्यां बहुसंवादपल्लवितां सूत्रोपनिबद्धां कृत्वा सुगमां चकारेति भास्वतीकारः ( १।१ )। पतञ्जलिः किल अनुशशास, अतः प्रतीयते ततः प्रागपि योगविद्या सुविशदाऽऽसीदिति। व्याख्यातॄणां मते योगसूत्रात् प्राग् हैरण्यगर्भयोगविद्या प्रचलिताऽसीत्[2], याऽस्य शास्त्रस्य उपजीव्यभूता।

योगसूत्रं खलु 'सांख्यप्रवचन'नाम्नाऽपि व्यवह्रियते। अत एव जयमङ्गला-टीकायां योगसूत्राणि साङ्ख्यप्रवचनपदेन उद्धृतानि ( द्र० ४७ कारिका )। योगभाष्यकारोऽपि प्रतिपादान्ते 'सांख्यप्रवचने योगशास्त्रे' इत्याह। सांख्यीया भूततन्मात्रादयः पदार्थाः योगजचित्तस्थैर्यालम्बनीभूताः, योगजप्रज्ञयैव ते साक्षात्कृता भवन्ति—इत्ययं सिद्धान्तः प्रवचनपदेन व्यज्यते। अतश्च योगसूत्रो-पजीव्यभूत–हिरण्यगर्भयोगशास्त्रमपि सांख्यसंबद्धमिति निश्चप्रचम्।

**हैरण्यगर्भयोगः**—पतञ्जलेः प्राक् हैरण्यगर्भयोगः प्रचलित आसीदित्युक्तम्। स चातिविस्तृतः। शंकरादिभिश्च एतद्योगवचनं स्मृतम्। विष्णुपुराणे 'हिरण्य-गर्भवचनं विचिन्त्येत्थम्' इत्युक्तम् ( २।१३।४४ )। अतश्चेदं गम्यते यद् 'सम्मानना परां हानिम्.........गच्छेयुर्नैव संगतिम्' ( २।१३।४२–४३ ) इति द्वौ श्लोकौ हिरण्यगर्भयोगशास्त्रीयाविति। श्रीधरोऽपि तथैवाह—"संमाननेत्यादि श्लोकद्वयं हिरण्यगर्भोक्तयोगशास्त्रवचनम्" इति ( २।१३।४३ टीका )। 'प्रपञ्च-परमार्थतावाद्ययं योगः' इति मधुसूदनसरस्वत्याह; तदसम्यक्। यतो हि परमार्थ-सिद्धौ प्रपञ्चस्यापि लयो भवति, स्वकारणेऽव्यक्तरूपेण प्रपञ्चसत्ता तिष्ठतीत्येव सुवचम्। 'हिरण्यगर्भशास्त्रस्य अन्यद् वचनं सनत्सुजातीय-शांकरभाष्ये विद्यते

---

१. दर्शनस्यास्य संक्षिप्तं विवरणं 'सर्वदर्शनसंग्रहे' द्रष्टव्यम्। प्रस्थानभेदेऽपि अति-संक्षिप्तमेकं विवरणमस्ति। पातञ्जलहठयोग-विवरणं सांख्यपरिभाषाख्ये ग्रन्थे दृश्यते।

२. योगसूत्रव्याख्यातारः प्रायेण हैरण्यगर्भयोगं पातञ्जलयोगोपजीव्यत्वेन स्मरन्ति, द्र० मणिप्रभाटीकारम्भः, तत्त्ववैशारद्यारम्भः, योगसुधाकरव्याख्यारम्भः, नागोजीव्याख्यारम्भश्च। भामत्याम् ( २।१।३ ) अन्येष्वपि ग्रन्थेषु चायं योगः स्मृतः। योगियाज्ञवल्क्ये दृश्यते–'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः' इति ( १२।५; अपि च द्र० शान्ति० ३४९।६५ )।

(तथा च हिरण्यगर्भे—'या नित्या' इत्यादि'''' १।४२ )।' वचनान्तरम् 'उक्तं च हिरण्यगर्भे' इत्युक्त्वा शंकर उदाजहार 'यथा पान्थस्ये'त्यादिना ( २।१७ भाष्यम् )। वचनान्तरं च ( अन्नाङ्गनादि'''''''' ) १।४१ भाष्ये दृश्यते। हिरण्यगर्भीययोगशास्त्रं परम्परायां प्रसिद्धमासीद्। अत एव योगग्रन्थेषु अन्तराऽन्तरा 'ब्रह्मणा कीर्तितम्' इत्येतादृशानि वचांसि दृश्यन्ते। हैरण्यगर्भाश्रितयोगग्रन्थेभ्य उपर्युक्तानि वचनान्याहृतानीति प्रतीयते। महाभारतीयाश्वमेधपर्वणि ( ३५।१५–५२।४० ) ब्रह्मप्रोक्तं यज् ज्ञानं विवृतम्, तत् सर्वथा सांख्ययोगानुसारीति प्रतीयते—शब्दतोऽर्थतश्च। अतो हिरण्यगर्भयोगाश्रितमिदं प्रकरणमिति कथनं सर्वथा साध्वेव। पुराणान्तरेष्वपि ब्रह्मोपदेशपूर्णमेतादृशं प्रकरणं विद्यत एव।

वैष्णवदृष्ट्यास्य योगस्योपबृंहणात्मकमेकं विवरणम् अहिर्बुध्न्यसंहितायाम् ( १२।३१–३८ ) उपलभ्यते। अनेन सह योगसूत्रस्य शब्दतोऽर्थतश्च साम्यमस्तीति दृश्यते। अतः 'हैरण्यगर्भशास्त्रानुसारि खल्विदं पातञ्जलशास्त्रम्' इति युक्तोऽयं प्रवादः। वयं मन्यामहे—अतिप्राचीनं हैरण्यगर्भशास्त्रं कालक्रमाद् बहुसंवादादिषु अतिविस्तृतं बभूव, अत एव तत्सारग्रहणं कृत्वा पतञ्जलिर्योगसूत्रं प्रणिनाय। तदिदं शास्त्रमपि सांख्यसंबद्धमिति प्रागुक्तम्। अहिर्बुध्न्यसंहितायां दर्शितं यदस्मिञ् शास्त्रे द्वे काण्डे आस्ताम्—निरोधसंहिताकर्मसंहितानामधेये। ईश्वरप्रणिधानमप्यत्र अनुशिष्टमासीदित्यपि विज्ञायते। विस्तरतो विवृतमिदम् अन्यत्र ( O. D. S. S. T. पृ० ७०–७२ )।

**कोऽयं हिरण्यगर्भः**—हिरण्यगर्भविषये मतान्तराणि दृश्यन्ते। कश्चिद् मनुते यत् कपिल एव हिरण्यगर्भ इति। आह च भास्वतीकारः—"हिरण्यगर्भोऽत्र परमर्षेः कपिलस्य संज्ञाभेदः। यथोक्तम्—विद्यासहायवन्तं मामित्यादिः ''''''''भगवतः कपिलस्यापि धर्मज्ञानादीनां सहजातत्वात् स श्रद्धावद्भिर्ऋषिभि हिरण्यगर्भाख्यया पूजित इति तस्यापि हिरण्यगर्भसंज्ञा। भगवता कपिलेनैव प्रवर्तितौ सांख्ययोगौ" ( १।१ ) इति।

अपरे पुनः कथयन्ति—सर्गादौ ब्रह्मणा हिरण्यगर्भेण स्वाध्यायशीलानृषीन् प्रति योगविद्योपदिष्टा, अथवा तत्प्रेरणयैव स्वाध्यायवन्त ऋषयो योगविद्यां सहजातसंस्कारबलेन प्राप्तवन्तः; अत एव "स्वाध्यायादिष्टदेवतासंप्रयोगः" ( २।४४ ) इति सूत्रं सार्थकं भवति। न खलु हिरण्यगर्भतो लौकिकं ज्ञानं प्रापणीयमित्यतः योगज्ञानमेव हिरण्यगर्भत उपलब्धमृषिभिरित्यभ्युपेयम्। जन्मसिद्ध्युदाहरणेषु हिरण्यगर्भमपि केचिद् गणयन्ति (हठयो० टीका ४।१४)।

अन्ये प्राहुः—हिरण्यगर्भनामा कश्चिदृषिरासीत्, तेनोपदिष्टमादौ योगविद्येति । मतमिदमितिहासपुराणतो न सिध्यति ।

एषु मतेषु विचार्यमाणेषु इदं प्रतिभाति—यतो हि योगगम्याश्च सर्वे मूलभूता अर्थाः सांख्यीया एव, अतः अविनाभाविनौ सांख्ययोगौ। सांख्यज्ञानं च नारायणाश्रितमिति (शान्ति० ३०१।११४) कृत्वा योगविद्यायाः मूलभूतः प्रकाशक इह सर्गे नारायणो हिरण्यगर्भ एव । ऋषिपरम्परागता सा विद्या परमर्षिणा कपिलेन सोपपत्तिका प्रोक्तेति कृत्वा मनुजसमाजे योगविद्याप्रवर्तनं विशेषतः कपिलेन कृतमिति कथनं समीचीनमेव। तत्त्वतस्तु हिरण्यगर्भाश्रितेयं विद्येति कथनं संगच्छते; निर्गुणेश्वरः क्लेशाद्यपरामृष्टोऽपि योगविद्यानिधानमिति स्वीकार्यमेव । एतां विद्यामाश्रित्यैव हिरण्यगर्भयोगविद्याविवरणपरा ग्रन्थाः केचन प्रणीता योगिभिरित्यपि निश्चीयते । यदा पुनः बहुसंवादविभक्तेयं विद्या अतिविस्तीर्णा, दुरवधारणा च जाता तदा विद्यारक्षार्थम् अमितधीः कारुणिकः पतञ्जलिर्योगविद्यामिमां न्यायपूर्णैः सूत्रैर्जग्रन्थ—इत्यहो अस्य पुण्यमहिमा ।

**पतञ्जलिनामानः शास्त्रकाराः**—कोऽयं पतञ्जलिरिति विचार्यमाणे नैकशास्त्रकारा बहवः पतञ्जलयो दृश्यन्ते । तथा हि—

१—सामवेदीयपातञ्जलशाखा-प्रवक्ता ( वैदिक वाङ्मय का इतिहास, भाग १, पृ० ३१२ )।

२—सामवेदीयनिदानसूत्रप्रवक्ता ।

३—योगसूत्रकारः ।

४—महाभाष्यकारः ।

५—चरकसंहितायाः प्रवक्ता, चरकव्याख्याता, चरकवार्त्तिककारो वा ।

६—३।४४ व्यासभाष्यधृतद्रव्यलक्षणकारः ।

७—युक्तिदीपिकाधृतपतञ्जलिनामाचार्यः ।

८—लोहशास्त्रकारः ( यथाह तत्त्वसंग्रहटीकातत्त्वचन्द्रिकायां शिवदासः, पृ० ६०३ बंगभाषासंस्क० ) ।

९—रसशास्त्रीयग्रन्थविशेषकारः ( अयमेव लोहशास्त्रकार इति केचित् ) ।

१०—वातस्कन्धादिवैद्यकग्रन्थकारः ( वैद्यकवृत्तान्त, पृ १६४ ) । अयमपि पूर्वोक्त एवेति केचन ।

**अस्मत्पक्षः**—पतञ्जलिविषये हेमराजशर्मा ( काश्यपसंहितोपोद्घाते ), गुरुपदहालदारः ( वैद्यकवृत्तान्त-वृद्धत्रयी-व्याकरणदर्शनेर-इतिहास-ग्रन्थेषु ) युधिष्ठिरो मीमांसकः ( व्याकरण शास्त्र का इतिहास-ग्रन्थे ), उदयवीरशास्त्री ( सांख्यदर्शन का इतिहास ग्रन्थे ), सुरेन्द्रनाथदासगुप्तः ( H. I. P. ग्रन्थे ),

राधाकृष्णन्महोदय ( I. P. ग्रन्थे ) अन्ये च आयुर्वेदविदो व्याकरणज्ञा दर्शनविचारकाः बहुविचारितवन्तः । साधक-बाधकदृष्ट्या सर्वे विचारा अस्माभिरवधारिताः । अत्रास्माकमयं निर्णयो यत् न खलु योगसूत्रकारः पतञ्जलिर्महाभाष्यकारो वा, चरक-व्याख्याता वा, लोहशास्त्रकारो वा । अत्र रामभद्रदीक्षित-भोजराज-चक्रपाणि-प्रभृतीनां मतमज्ञानविजृम्भितमेव । शेषनागः पतञ्जलिनामा, स च महाभाष्यादीनि प्रणिनायेति तर्कासहं वचः । न खल्वेतादृशोऽवतारवादो वैदिकः, न वाऽयं न्यायेन संगमनीयः, नवा योगशास्त्रानुसारीदं कथनम् । सर्पनागनामसु पतञ्जलि-नाम पठ्यते पुराणे, ततश्च भ्रमोऽयं संजात इति प्रतिभाति । महाभाष्यकारस्य किमपि नागवाचकमुपनाम आसीत् ततोऽपि 'शेषनागावतारः पतञ्जलिः' इति मतमाविर्भूतं भ्रान्त्येति केचित् । नामसाम्यघटितानि भ्रमपूर्णानि मतान्यस्मद्देशे सर्वत्रोपलभ्यन्ते—इति न विस्मरणीयम् ।

वस्तुतस्तु योगसूत्रकारः पतञ्जलिरार्षकलभवः पुरुषः । उपकादिगणे ( अष्टा० २।४।६९ ) पतञ्जलशब्दः पठ्यते। तस्यापत्यं पतञ्जलिरिति संभाव्यते। आङ्गिरसः पतञ्जलिर्मत्स्यपुराणे ( गोत्रप्रवरप्रकरणे ) स्मृतः ( १९६।२५ ) । पतञ्जलिनाम सामशाखाप्रवक्तृनामसु स्मर्यते, अयमेव योगसूत्रकार इत्यास्माकीना दृष्टिः ।[1] विस्तरस्तु 'योगविद्या'-ग्रन्थे द्रष्टव्यः ।

योगसूत्रप्रणेता पतञ्जलिः कः—यतो हि महाभाष्यकारादयो न योगसूत्रकारः तर्हि पारिशेष्यात् निदानसूत्रप्रवक्ता पातञ्जलशाखाप्रवक्ता वा पतञ्जलिर्योगसूत्रकार इत्यभ्युपेयमेव । एतौ कालदृष्ट्याऽतिप्राचीनौ, योगसूत्रमपि सर्वदर्शनप्राग्भावि ( यथोक्तमुपरिष्टात् ), अत एतौ योगसूत्रप्रणेतारौ भवितुमर्हतः । तत्र निदानसूत्रकार एव योगसूत्रकार इत्यत्र किमपि लिङ्गं न दृश्यते । शाखाकारं पतञ्जलिमभिलक्ष्य वायौ (६१।४३) ब्रह्माण्डपुराणे (१।३५।४६) च 'बुद्धिमान्' इति विशेषणं प्रयुक्तम् अतो गम्यते शाखाकार एव युक्तिपूर्णदर्शनशास्त्रस्यापि[2] प्रणेतेति। कश्चित् प्रवादोऽपि वर्तते—योगाचार्यः पतञ्जलि-

---

१. अत्र माध्यन्दिनशतपथगत-पतञ्चलशब्दोऽपि द्रष्टव्यः ( १४।६।३।१; १४।६।७।१ ) । काण्वबृहदारण्यकेऽप्ययं प्रसङ्गोऽस्ति ( ३।३।१; ३।७।१ ) । केचिदत्र पतञ्जल-पाठोऽस्तीति प्रदर्शयन्ति, एवं सत्यार्षकालिकोऽयं पतञ्जलिरिति दृढं सिध्यति ।

२. प्राचीनकाले योगविद्या सन्यायाऽभ्यसनीया आसीदिति विज्ञायते, यथाहापस्तम्बः—"अध्यात्मिकान् योगाननुतिष्ठेत् न्यायसंहितान् अनैश्चारिकान्" इति

रेव महाभाष्यस्य निदानसूत्रास्यपि प्रणेता । एतेनापि प्रतीयते यद् निदान-सूत्रकार-योगसूत्रकारयोरैक्यं समाजे प्रविज्ञातमासीदिति । नामसाम्यात् पुनः महाभाष्यकारः पतञ्जलिरेव योगसूत्रादीनामपि कर्तेति प्रवादो जातः ।

योगसूत्रे यादृशी भाषा प्रयुक्ता, न सा आरण्यकोपनिषद्गताया भाषाया भिद्यते, अतो भाषाभेदप्रयुक्तकर्तृभेदरूपः तर्कोऽत्र न युक्तः ।

सामवेदो योगसूत्रं च—यदाऽस्माभिरुच्यते यत् सामशाखाविशेषकारः पतञ्जलिरेव योगसूत्रकारः, तदा त्रिधाऽस्माकं युक्तयो वेदितव्याः । प्रथमतोऽस्माकं प्रतिज्ञा यद् योगविद्या सामवेदेन सह सामान्यतः संबद्धा । द्वितीयाः—ईश्वरप्रणिधानप्रतिपादकः पातञ्जलयोगः ( ईश्वरप्रणिधानमार्गाद् भिन्नोऽपि योगमार्गोऽस्ति, सोऽपि श्रौतः, न स मार्गः पतञ्जलिना खण्डित इति वेदितव्यम् ) विशेषतः सामवेदेन संबद्धः । तृतीयाः—सामवेदीयग्रन्थेषु पातञ्जलयोगदर्शनविचारसदृशानि मतान्यपि दृश्यन्ते ( शब्दतोऽर्थतश्च ) ।

अथात्र युक्तय उपस्थाप्यन्ते, यासां समूहेनास्मदभिमतेष्टसिद्धिर्भवत्येव । तथा हि—

१—ईश्वरप्रणिधानसूत्रेण भक्तिसाधनस्य महत्तां ( द्र० योगभाष्यम् १।२३ ) दर्शयति पतञ्जलिः । असकृच्च ( १।२६, २।१, २।४५ ) प्रणिधानमिदमुक्तम्। अतोऽस्मिन् भक्तिमार्गे पतञ्जलिर्बद्धादर आसीदित्यनुमीयते। सा च भक्तिः विशेषेण प्रतिपादिता सामवेदे । नारद-शाण्डिल्यादयः भक्त्याचार्याः सामवेदप्रवक्तार इति स्मर्यते, अतश्च योगसूत्रं सामवेदसंबद्ध-मिति प्रतिभाति ।

२—भक्तियोगाचार्या नारदादयो योगविद्याचार्या इत्यपि दृश्यते । नारदस्य योगविद्यावेत्तृत्वमसकृत् शान्तिपर्वणि उक्तम् । एतत्कृताः सांख्य-योगसंबद्धाः प्रश्ना उत्तराणि च महाभारते ( आदि० ७५।७–८; शान्ति० ३२६-३३१ अ०; २७५ अ०; २८७ अ० ) दृश्यन्ते । अन्येषां भक्तियोगा-चार्याणां विषयेऽपि इत्थमेव दृश्यते ।

३—हिरण्यगर्भयोगविद्याविवरणम् अहिर्बुध्न्यसंहितायां दृश्यते । सेयं संहिता वैष्णवी, वैष्णवीया भक्तिश्च पुनः सामवेदीया । अतः प्रतीयते हिरण्य-

---

( १।८।१ )। आहात्र टीकाकृत् शंकरः—"अध्यात्मं भवतीति अध्यात्मिकाः, छान्दसं ह्रस्वत्वम् । तेहि चित्तसमाधानहेतुत्वाद् योगाः न्यायसंहितान् उपपत्तिसमन्वितान्"। अर्वाचीनकाले न्यायदृष्टिरियं प्रायेण नष्टा, अत एव वैष्णवशैवप्रत्यभिज्ञादि-संप्रदाया योगानुवर्तिनोऽपि न सम्यग्दर्शिनः ।

गर्भयोगविद्याऽपि सामसंबद्धासीत् । सा च विद्या पातञ्जलयोगोपजीव्यभूतेति प्रागुक्तम् ।

४—ईश्वरवाचक-प्रणव-जपस्य महिमाऽपि ( चित्तस्थैर्याय ) अत्र प्रतिपादितः, तदिदं प्रतिपादनमप्यस्य शास्त्रस्य सामवेदसंबद्धत्वं दर्शयति । योग-शास्त्रविहितजपोऽपि स्तोत्रविशेष एव, स्तोत्रं पुनः साम 'सामभिः स्तुवन्ती'ति कथनात् ( निरुक्तम् १३।३ ) । मुण्डकादिषु प्रणवो न प्राजापत्यः, सामवेदी-यार्षेय-ब्राह्मणे तु प्राजापत्योऽयमिति ( १।१ ) । दृष्टिरियं योगसूत्रेऽप्यस्ति ।

५—चित्तसमाधये सामगानस्योपयोगिता योगिसम्मता ( द्र० योगविद्-याज्ञवल्क्यकृतस्मृतिः, ३।११२ ) अतः पातञ्जलयोगविद्या यदि सामसंबद्धा-सीत् तर्हि न विप्रतिपत्तेरवसरः कश्चित् ।

६—पातञ्जलयोगप्रमाणभूत आचार्यो वार्षगण्यः कस्याश्चित् सामशाखायाः प्रवक्तेति दृश्यते ( वै. वा. इ. पृ. ३२० ) । योगाचार्यौ गौतमगार्ग्यावपि सामशाखाकाराविति कथयितुं शक्यते, इत्यतोऽपीदं शास्त्रं सामसंबद्धमिति गम्यते । सामशाखाकारा अन्ये हिरण्यनाभादयः आचार्याश्च महायोगिन आसन्निति पुराणेषु बहुधोक्तम् ।

७—सामप्रवक्ता जैमिनिर्योगी आसीदित्यस्माभिः प्राग् ( पृ. १३ ) उक्तम् । अतो योगशास्त्रमपि सामवेदे प्रपञ्चितं स्यादिति मन्यामहे । स च सामवेदः पुराऽपि विश्वावसुगन्धर्वसंभृत इति वायौ ( ६५।२६ ) ब्रह्माण्डे ( २।१।२५ ) चोक्तम् । विश्वावसुरयं सांख्ययोगविदासीदिति शान्तिपर्वतो विज्ञायते ( ३१८।२६–८४ ) । अतः पातञ्जलयोगः सामशाखाविशेषे विवृत इति कथनं संगतमेव भवति । ब्रह्मविद्यया तत्त्वज्ञानेन च सह साम्नः संबन्धः प्राग् दर्शित एव ( पृ. १३ ) ।

८—बृ. यो. याज्ञ०-( ८।१६-२१ )-प्रतिपादितः प्राणायामः पातञ्जलसूत्रा-नुसारी। ग्रन्थेऽस्मिन् प्रणव उद्गीथरूपेणोक्तः ( २।११ ) । २।८५-८६ इत्यत्र दृष्टिरियं प्रपञ्चिता । सा च दृष्टिः सामवेदीयच्छान्दोग्यारम्भेऽभ्युपगता, अतोऽपि सामसंबद्धा पातञ्जलयोगविद्या । हिरण्यगर्भयोगीया प्रणवसाधनाप्युल्लिखितात्र ( २।६६ ) ।

**योगसूत्रं सामशाखा च**—सामवेदेन ( सामवेद-शाखाविशेषेण वा ) सह पातञ्जलयोगविद्याया नेदिष्ठः संबन्ध आसीदिति सामान्यत उक्तम् । क्वचिद् विचारसाम्यमप्यवलोक्यते, तथाहि—सामवेदीयजैमिनीयोपनिषद्ब्राह्मणे 'प्रतिबोधविदितं मतम्' ( ४।१०।२ ) इत्युक्तम् । तदिदं मतं पातञ्जल-योगे 'बुद्धेः प्रतिसंवेदी पुरुष' इति वाक्येन प्रदर्शितम् । अत्र शब्दसाम्यमपि

लक्षणीयम् । अन्यासूपनिषत्सु नेदृशं कथनमुपलभ्यते । पातञ्जलयोगगता चर्चा सामशाखाविशेषे आसीदित्यनेन गम्यते । तथैव सामवेदीयच्छान्दोग्योपनिषदि समाननामक-प्राणोपासनफलभूतं यदुक्तं ( ३।१३।४ ) तद् योगसूत्रेऽपि ( ३।४० ) अर्थत उक्तम् । इदमपि पूर्वोक्तार्थं ज्ञापयति । अन्यत्रापि छान्दोग्योपनिषद्गतं मतं योगसूत्रीयविचारानुरूपं दृश्यते। सामवेदीयभाल्लविशाखीयानि वचनानि ( सुरेश्वरसायणाभ्यां स्वग्रन्थेषूद्धृतानि ) अपि योगसूत्रार्थं पुष्णन्तीति दृश्यते। अतः पातञ्जलयोगशास्त्रं सामवेदगतमिति अनपलाप्यम् ।

इदमपि प्रतीयते यत् सामान्यत इयं योगविद्या कतिपयसामशाखासु प्रोक्तासीत्, यां विद्यामाश्रित्य सामशाखाप्रवक्ता पतञ्जलिर्योगसूत्रं न्यायोपपत्तियुक्तं प्रणिनाय । शास्त्रमिदमनुशासनपद्धत्या प्रणीतम् । सेयं पद्धतिः शतपथब्राह्मणेऽपि ( ११।५।५।८ ) स्मृता। अतोऽतिप्राचीनकाल एवेदं सूत्रं निर्मितमिति सिद्धम् ।

**योगसूत्ररचनाकालः**—आधुनिका विद्वांसो मन्यन्ते यदिदं योगसूत्रं ईसवीयशतकविशेषे, ईसवीयपूर्वप्रथमद्वितीयशतकविशेषे वा प्रणीतमिति[1] । तदिदं कथनमविचारितरमणीयम्, प्राचीनतमबौद्धग्रन्थेष्वपि योगसूत्रानुकृतिदर्शनात् । यतो हि बौद्धाचार्या एव पातञ्जलयोगमनुकृतवन्तः, अतस्तद्रचितग्रन्थेषु योगविचारपरायणेषु पातञ्जलसूत्रसदृशशब्दव्यवहारबहुलेषु क्वचिद् अज्ञानतो भ्रान्तिर्दृश्यते । यदि एतान् ग्रन्थान् अन्वकरिष्यत् पतञ्जलिस्तर्हि पातञ्जलसूत्रेऽपि तादृशी भ्रान्तिः स्यात्; न च दृश्यते तादृशी भ्रान्तिः, अतोऽवगम्यते—पातञ्जलसूत्रमेवानुकृतं बौद्धैः । वितर्कादिसमाधिविचारेषु प्राचीनबौद्धाचार्या न न्यायानुसारिणीं दृष्टिं प्रादर्शयन्निति दृश्यते । स्वमौलिकत्वख्यापनपरायणैर्बौद्धाचार्यैरित्थमुत्सूत्रं चिन्तितमित्यतः योगसूत्रं प्राचीनबौद्धाचार्येभ्योऽपि प्राचीनतरमिति ।

केचिद् वदन्ति यद् योगसूत्रे बौद्धमतोल्लेखो वर्तते । तदिदं कथनमसम्यक् । 'न तत् स्वाभासं दृश्यत्वात्' ( ४।१९ ) इति सूत्रे स्वाभाविकशङ्काया उत्तरं दत्तम् । तथैव 'न चैकचित्ततन्त्रम्' ( ४।१६ ) इति सूत्रमपि पूर्वसूत्रानुसारिशङ्कोन्मूलनपरम्, नेदं कमपि बौद्धपक्षं लक्षयति स्वतः। अपि चेदं सूत्रं भाष्यमेवेति प्रतीयते । एवमन्यत्रापि योगसूत्रं न बौद्धमतं लक्षयति । अन्येषां दर्श-

---

१ केचन १०० ई० पू० काल इति । अपरे तु ३००--५०० ई० इति । खीष्टपूर्वा द्वितीया शताब्दी इत्यन्ये । खीष्टपूर्वतृतीयशताब्दीतोऽपि प्राचीनमिदं योगसूत्रमिति केचन । द्र० I. P. ग्रन्थस्य, H. I. P. ग्रन्थस्य च पातञ्जलयोगप्रकरणम् ।

नानामपि मतानि न योगसूत्रे लक्षितानीत्यतः प्रचलितेभ्यो दर्शनग्रन्थेभ्य इदं योगसूत्रं प्राचीनतममिति । न कोऽपि वैष्णवादिसंप्रदायगतचिन्तालेशोऽप्यत्र विद्यत इत्यतः सर्वसंप्रदायोद्भवतः पूर्वमेवेदं सूत्रं प्रणीतम् ।

पातञ्जलसामशाखा कदा प्रोक्तेति प्रश्नो जागर्ति। दुरवधारणोऽयं प्रश्नः। पुराणेषु इदमुक्तं यत् प्रचलिता वेदशाखाः कृष्णद्वैपायनतः प्रवृत्ता इह मन्वन्तरे । पुराणानुसारेण व्यासशिष्यजैमिनितः सामशाखापरम्परा प्रचलिता, यस्यां गुरुशिष्यपरम्परायां पतञ्जलिर्बभूव । सा यथा—

कृष्णद्वैपायनो व्यासः, ततो जैमिनिः, ततः सुत्वा, ततः सुकर्मा, ततः पौष्यिञ्जिः, ततः कुथुमिः, ततः पराशरः ततश्च पतञ्जलिरिति ( वायु ६१ अ०; ब्रह्माण्ड १।३५ अ० ) । अतो भारतयुद्धात् पश्चादेव पतञ्जलिराविरासीदिति गम्यते । इयं गणनाप्रणाली सर्वथेतिवृत्तानुसारिणीति न प्रतीयते । यतो हि पुराणोक्तशाखापरम्परागणना न वैदिकग्रन्थानुसारिणी सर्वथा । अतः प्रतीयते बहुपरम्परासु विभक्ताः शाखागणनाप्रवादाः प्रायेण भ्रष्टाः, पुराणकाराश्च लोकपरम्परातो नामानि श्रुत्वा कथञ्चित् आचार्यपरम्पराक्रमं दर्शितवन्त इति[१]। अतः कृष्णद्वैपायनप्राचीना अपि शाखा व्यासपरभविकरूपेण गणिताः, बह्व्यश्च शाखा न परिगणिताः, गुरुपरम्परायामपि पुराणकारैर्व्यत्यासः कृतो बहुधा । अत एव क्वचित् पुराणे सामशाखा-प्रवक्ता कृतनामा हिरण्यनाभशिष्यः व्यासशिष्यजैमिनेरर्वाग्भव इत्युक्तम् । अन्यत्र च स एव कृतः सूर्यवंशीयोऽतिप्राचीनो राजेति कथितम् । अतो गम्यते यत् शाखाप्रवचनकालः पुराणनिर्दिष्टो न ग्राह्यः सर्वात्मना, अपि तु विचार्यैवेति । हिरण्यनाभश्च पौष्यिञ्जिसतीर्थ्य इति पुराणेषूक्तम् ।

अस्मन्मते महाभारतयुद्धादपि प्राचीनः पतञ्जलिः । कालस्य सम्यङ् निरूपणं तु न कर्तुं शक्यते सांप्रतम् ।

**योगसूत्रसंख्याविमर्शः**—सूत्रसंख्याविषये मतद्वैधं दृश्यते । तच्च मतद्वैधमल्पीयः । तथाहि—

( १ ) ३।२० सूत्रम् ( न च तत्.... ) तत्त्ववैशारद्यां स्वीकृतम् । विज्ञानभिक्षुमतेन वाक्यमिदं भाष्यमेव । अत्र भिक्षुमतमेव सम्यगिति । भावागणेश-नागोजिभट्टाभ्यामपि नेदं व्याख्यातम् ।

( २ ) ३।२१ ( कायरूप.... ) सूत्रानन्तरं 'एतेन शब्दाद्यन्तर्धानमुक्तम्' इति सूत्रं चन्द्रिकाटीकायामस्ति । अत्राह योगसूत्रग्रन्थसम्पादकः—भोजराज-

---

१ विषयेऽस्मिन् मत्कृतः 'पुराणगत वैदिक-सामग्री का समीक्षात्मक अध्ययन'-नामा ग्रन्थो द्रष्टव्यः ।

भावागणेशाभ्यां कायरूपेति-सूत्रव्याख्यान्ते एतत्-सूत्रस्य व्याख्यातत्वेऽपि नागोजीभट्ट-मणिप्रभाकाराभ्याम् अव्याख्यातत्वाद् विज्ञानभिक्षुणा 'सूत्रकारस्य न्यूनतां परिहरति एतेने'तीत्युक्तत्वाच्च नेदं सूत्रम्। अत्रैव 'दिनमाससंवत्सराः' इत्येकं सूत्रं दृश्यते, तदपि प्रक्षिप्तमेव।

( ३ ) ४।१६ सूत्रम् ( न चैकचित्ततन्त्रं वस्तु.... ) तत्त्ववैशारदीकार-सम्मतम्। भोजराजचन्द्रिकाकारमते नेदं सूत्रमिति। इदमेव मतं सम्यगिति प्रतीयते।

( ४ ) 'ते प्रतिप्रसवहेयाः सूक्ष्माः' ( २।१० ) इति खलु भाष्यमेव वाच-स्पतिमते—इति प्रतीयते। यथाह सः—"कस्मात् पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्यत आह—ते प्रतिप्रसवेत्यादि" ( २।१० ) इति। नागेशोऽपि एवमेव निर्दिशति; यथाह—"ते प्रतिप्रसवहेयाः सूक्ष्मा इति तु भाष्यमेव न सूत्रमिति वाचस्पतिस्वरसः।"

( ५ ) केचिद् वदन्ति—तृतीयपादपर्यन्तमेव योगदर्शनम्, अत एव तृतीयपादान्ते ३।५५ सूत्रे 'इति'-पदं दृश्यते, चतुर्थपादस्तु स्वपक्षस्थापन-परपक्षनिर्जयात्मकः कालान्तरे केनापि योजित इति ( H. I. P. पृ० २३० )। तदिदमविचारितरमणीयम्, भाष्यविवरणे प्रतिपादान्ते 'इति'-पदप्रयोग-दर्शनात्। वाचस्पतिमतेऽस्मिन् सूत्रे 'इति'-पदमस्ति, ( इति सूत्रसमाप्तौ ) भिक्षुमतेन नेतिपदं सार्वत्रिकम् ( क्वचिदिति-शब्दः सूत्रान्ते तिष्ठति, स च हानोपायव्यूहसमाप्तिसूचनार्थः )। अतः इतिशब्दपाठबलेन न किमपि साधयितुं शक्यते। यदि नाम इति-शब्द-पाठः प्रामाणिकः, तथापि इदमेव सिद्धं स्याद् यत् तृतीयपादपर्यन्तं मूलग्रन्थरचनम्, चतुर्थपादस्तु परिशिष्टभूतः। स च ग्रन्थकृतैव कृतः, यथा निरुक्तपरिशिष्टं यास्ककृतमेवेति दृश्यते। इदमपि चिन्तनीयं कथं वाचस्पतिः 'इति पादसमाप्तौ' इत्याह, यतो हि पादान्तरसमाप्ति-द्योतनार्थं नेतिशब्दः प्रयुक्तः सूत्रकृता। किञ्च 'इति'-शब्देन सूत्रसमाप्तिर्द्योत्यत इति कथनं न किमपि विशिष्टं तात्पर्यं गमयति। इदं सूत्रं क्वचिच्चोद्धृतं वर्तते, तत्र 'इति'पदघटितः पाठो नोल्लिखितः ( द्र० यशोविजयकृतयोगवृत्तिः, पृ० ४४ )। नागोजिभट्टादयो वृत्तिकाराश्च 'इति' पदं सूत्रे न पठन्तीति वेदितव्यम्।

**योगसूत्रपाठान्तराणि**—योगसूत्रव्याख्यानेभ्यः प्रतीयते यत् क्वचित् सूत्रेषु पाठभेदः समजनि। प्रायेण इमे पाठभेदा नार्थभेदकारकाः, लिपिकरप्रमाद-जाताश्च, अतो न ते विचारपदवीमारोहन्ति। अत्र टीकादिदर्शितानि पाठान्तराणि एव प्रदर्श्यन्ते। प्रायेण इमे पाठभेदाः टीकाषट्कयुक्तयोगसूत्रग्रन्थे ( चौखम्बा-प्रकाशिते ) निर्दिष्टाः ( 'चौ०' इति शब्देन तत् संस्करणं निर्दिष्टम् )।

| सूत्रम् | पाठान्तरम् | व्याख्यानाम |
| --- | --- | --- |
| १।५ | क्लिष्टा अक्लिष्टाः | चौ० |
| १।१४ | दीर्घकालादर··· | " |
| १।१४ | सत्कारासेवितः | " |
| १।१७ | अस्मितानुगमात् | योगवा० |
| १।२१ | अधिमात्रोपायानां तीव्रसंवेगानाम् | चौ०; योगवा० |
| १।२५ | सार्वज्ञ्यबीजम् | चौ०, योगवा० |
| १।३५ | उत्पन्ना स्थिति-निबन्धनी | " |
| १।४६ | श्रुतानुमानप्रज्ञाभ्यां सामान्यविषया | " |
| १।५१ | समाधिरिति | विव० |
| २।३ | ०क्लेशाः क्लेशाः | चौ० |
| २।६ | एकात्मतैवास्मिता | " |
| २।७ | सुखानुजन्मा | विव० |
| २।८ | दुःखानुजन्मा | विव० |
| २।९ | तन्वनुबन्धोऽभिनिवेशः | चौ० |
| २।१५ | गुणवृत्त्यविरोधाच्च | ", योगवा० |
| २।१६ | लिङ्गा गुणपर्वाणः | विव० |
| २।२५ | तदभावे संयोगस्याभावो | चौ० |
| २।२७ | प्रान्तभूमौ प्रज्ञा | " |
| २।२७ | प्रान्तभूमिः प्रज्ञा | " |
| २।३० | तत्राहिंसा | " |
| २।३१ | एते जाति | " |
| २।४१ | सौमनस्यैकाग्रता | " |
| २।४२ | अनुत्तमसुखलाभः | " |
| २।४७ | शैथिल्यानन्त्य | " |
| २।५४ | चित्तस्वरूपानु | " |
| २।५५ | परमवा वश्यता | " |
| २।५५ | इन्द्रियाणामिति | विव० |
| ३।१ | देशसंबन्धः | " |
| ३।१ | चित्तस्य सबन्धः | " |
| ३।४ | तत् त्रयम् | " |
| ३।९ | निरोधलक्षणचित्तान्वयः | " |

| सूत्रम् | पाठान्तरम् | व्याख्यानाम |
|---|---|---|
| ३।१२ | शान्तोदितौ ( नास्ति ततः पुनरिति | ,, |
| ३।२० | न तत् सालम्बनम् | ,, |
| ३।२१ | ०संयमाद् ग्राह्य | ,, |
| ३।३५ | परार्थात् | ,, |
| ३।३५ | परार्थान्यस्वार्थसंयमात् | ,, |
| ३।४० | प्रज्वलनम् | ,, |
| ३।४५ | सम्पद्धर्मानभिघातश्च | ,, |
| ३।४६ | संहननत्वादीनि | ,, |
| ३।४६ | संहननानि | ,, |
| ३।४८ | मनोजवत्वं | विव० |
| ३।५१ | स्वाम्युपनिमन्त्रणे | चौ० |
| ३।५१ | स्थान्युपमन्त्रणे | विव० |
| ३।५२ | क्षणक्रमयोः | चौ० |
| ३।५२ | विवेकज्ञानम् | ,, |
| ३।५५ | कैवल्यम् ( नेतिशब्दः ) | ,, |
| ४।१० | अनादित्वमाशिषो | ,, |
| ४।१२ | स्वरूपं नास्त्यध्वभेदाद् | ,, |
| ४।१२ | अध्वभेदात् तद्धर्माणाम् | ,, |
| ४।१५ | विविक्तः पन्थाः | विव० |
| ४।१६ | तत्प्रमाणकं | चौ० |
| ४।१७ | रागापेक्षत्वात् | विव० |
| ४।१८ | अपरिणामात् | चौ० |
| ४।२० | अनवधारणात् | ,, |
| ४।२१ | चित्तान्तरग्राह्ये | ,, |
| ४।२४ | वासनाचित्रमपि | विव० |
| ४।२५ | भावनानिवृत्तिः | चौ०, विव० |
| ४।३२ | कृतार्थानां ( तत इति नास्ति ) | चौ० |
| ४।३२ | परिणामक्रमपरिसमाप्तिः | विव. |
| ४।३३ | परिणामोऽपरान्त | चौ० |
| ४।३४ | पुरुषार्थशून्यानां प्रतिप्रसवः | ,, |
| ४।३४ | चितिशक्तेरिति | ,, |

शास्त्रान्तरेषु योगसूत्रप्रसङ्गः, योगसूत्रप्रभावश्च—परमर्षिदृष्टसर्वव्यापि-तत्त्वदर्शनसाधनभूतविद्याप्रवचनहेतुत्वादिदं योगसूत्रमतिप्रसिद्धं सर्वतः संचारि चाभवत्। योगविद्याप्रसङ्गे सर्वेषु प्रस्थानेषु साक्षाद्रूपेणासाक्षाद्रूपेण वा पातञ्जलसूत्रं स्मृतं निर्दिष्टं वा। विषयोऽयं 'योगविद्या का इतिहास'-ग्रन्थे विस्तरेणाभिधास्यते। इह च समासत एकं विवरणं प्रस्तूयते—

महाभारतं योगसूत्रं च—महाभारते पतञ्जलेर्नाम नोक्तमिति महच्चित्रम्। एवं सत्यपि हिरण्यगर्भयोगशास्त्रमत्र स्मृतम्। वसिष्ठो हिरण्यगर्भतो योगं प्राप्तवान् इति स्मर्यते ( शान्ति० ३०८।४५ )। अनेन हैरण्यगर्भयोगसत्ता सिद्धा। सा च पातञ्जलयोगोपजीव्यभूता। शान्तिपर्वणि ( ३०८ अ० ) षड्विंशतत्त्वरूपेण ईश्वरोल्लेखोऽस्ति। तदिदं कथनं हैरण्यगर्भयोगरीत्येति मन्तव्यम्। यद्यपि यथा जीवः किमपि 'तत्त्वं' न भवति तथैव ईश्वरोऽपि न महदादिवत् किमपि तत्त्वम्, तथाप्युपासनादृष्ट्या 'ईश्वरोऽपि तत्त्वविशेष' इति चिन्ता प्रचलितासीदिति गम्यते। योगसूत्रेऽपि 'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः' ( १।३२ ) इत्यत्र एकतत्त्वपदं प्रयुक्तम्, तच्चेश्वरं लक्षयतीति मिश्राः। अत ईश्वरेऽपि तत्त्वपदप्रयोगो नायुक्तः। सेयं दृष्टिः साधनाश्रिता, न तत्त्वाश्रयेति स्वीकरणीयम्।

महाभारते बहुत्र (विशेषतः शान्तिपर्वणि, अश्वमेधपर्वणि, अनुशासनपर्वणि च ) योगप्रसङ्गो विद्यते, तत्र योगसूत्रवत् कथनं प्रत्यक्षत उपलभ्यते। अन्यत्रापि 'सन्तोषः परमं सुखम्' इत्युक्तम् (वनपर्व २।४६)। अस्ति च योगासूत्रम् 'सन्तोषादनुत्तमः सुखलाभः' (२।४२) इति। अन्यश्च योगसूत्रसदृशः श्लोकः शान्तिपर्वणि—"ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात्, यथाभिमतमन्त्रेण प्रणवाद्यं जपेत् कृती" इति ( १९४।२०; श्लोकोऽयं पं० सुखलालजीसम्पादितपातञ्जलयोगदर्शन-हिन्दीभूमिकायामुद्धृतः पृ० ४७; न चायमस्मिन् स्थले दृश्यते )।

किञ्च, शान्ति० १९५ अध्याये यो ध्यानमार्गो वर्णितः, स च पातञ्जलानुसारीति प्रत्यक्षमेव ( यद् वा पातञ्जलोपजीव्यभूतहिरण्यगर्भयोगानुसारीति )। १९५।१५ श्लोके वितर्कादयः शब्दा अपि प्रयुक्ताः।

पुराणेषु योगसूत्रप्रसङ्गः—यतो हि योगसूत्रं प्रचलितेभ्यः पुराणेभ्यः प्राचीनतमम्, अतः योगविद्याविवरणप्रसङ्गे यौगिकतत्त्वोल्लेखे च क्वचिद् योगसूत्रच्छाया पुराणेषु दृश्यते। योगसूत्र-पुराणयोरत्यधिकं शब्दसाम्यं पूर्वोक्तं मतमेव विज्ञापयति। दिङ्मात्रमुदाह्रियते—

लिङ्गपुराणे योगविद्यावर्णनप्रसङ्गे ( पूर्वार्धे० ६ अ० ) यदुक्तं, तत् शब्दतो योगसूत्रमनुकरोति। अत्र व्याध्यादियोगान्तरायाणां दुःखादिचित्तविक्षेप-

सहभुवां प्रातिभादिविभूतीनां च विषये यदुक्तं तत् सर्वथा योगसूत्रशब्दानुकरणपरमिति दृश्यते ( १।३०: १।३१; ३।३६ )। अत्र व्यासभाष्यमपि अनुकृतमित्यपि दृश्यते। लिङ्गपुराणस्योत्तरार्धे नवमाध्यायेऽपीश्वरविषयिणी या चर्चा विद्यते ( ३६-५२ श्लोकेषु ) सापि योगसूत्रं १।२३-२६ भाष्यं च सर्वथा शब्दतोऽनुकरोतीति दृश्यते। पूर्वोत्तरपक्षरूपेण भाष्ये यदुक्तं तत् सर्वमत्र पुराणे तेनैव रूपेण प्रोक्तमित्यवलोक्यते, अतः प्रतीयते यदिदं पुराणगतं योगप्रकरणं केनापि विदुषा योगसूत्रं भाष्यं चाश्रित्य प्रणीतमिति। विष्णुपुराणे योगसूत्रसाम्यमस्ति शब्दतः, तच्च वाचस्पतिना स्वटीकायां यथास्थानं दर्शितम्। वायु-मार्कण्डेयादिष्वपि योगसूत्रेण सह शब्दसाम्यमस्ति, तच्च **योगविद्या**-ग्रन्थे दर्शयिष्यते।

शिवपुराणस्य वायवीयसंहितायामपि योगसूत्रभाष्यानुकरणं दृश्यते। आह च अप्पय्यदीक्षितः शिवार्कमणिदीपिकायाम्—"योगशास्त्रे हि............ईश्वरविषयकाणि सप्तसूत्राणि ( १।२३-२६ ) शिवपुराणे परमेश्वरप्रतिपादकानि वचनानि अनुसृत्यैव कृतानि। शिवपुराणे हि वायुसंहितायां वचनानि दृश्यन्ते—'न शिवस्याणवो बन्धः.........सा परैव न संशय' इति। अतो योगशास्त्रे उपबृंहिता योगविद्या श्वेताश्वतरनिरूपिता शिवयोगविद्यैव" इति (२।१।३)।

भागवतपुराणेऽपि योगसूत्रच्छाया दृश्यते—

| | | |
|---|---|---|
| भाग० २।२।१५ | — | द्र० यो० सू० २।४६ |
| भाग० ४।६।८ | — | द्र० यो० सू० ४।१ |

भागवते च 'बहुयोगग्रन्थसम्मतम्' इत्युक्तम् ( ५।१०।१५ ), अतः प्रतीयते भागवतात् प्राग् बहवो योगग्रन्थाः प्रणीता इति। सिद्धेशनामगणनायामत्र पतञ्जलिनाम स्मृतम् ( ६।१५।१२-१५ )। हिरण्यगर्भयोगोऽपि स्मृतः—"इदं हि योगेश्वरयोगनैपुणं हिरण्यगर्भो भगवान् जगाद यत्" इति ( ५।१६।१३ )।

योगवासिष्ठेऽस्ति श्लोकः—"यथाभिवाञ्छितध्यानात्............एकतत्त्वघनाभ्यासाद्" इति ( उपशमप्र० ७८।१६ )। श्लोकोऽयं योगसूत्रानुसारीति स्पष्टमेव। ( द्र० १।३६, १।३२ )

**वैष्णवग्रन्थेषु योगसूत्रप्रसङ्गः**—भागवतटीकाकृत् श्रीधर आह—"पातञ्जलेऽपि एत एव उक्ताः-अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति ( ३।१२।२ )। स्वकृतटीकासु श्रीधरोऽन्यत्रापि योगसूत्रमुदाजहार। यमादिव्याख्यायाम् अन्येऽपि वैष्णवाचार्याः योगसूत्राणि निर्दिशन्ति स्मेति दृश्यते।

**न्यायग्रन्थेषु योगसूत्रप्रसङ्गः**—न्यायवार्त्तिकतात्पर्यटीकायां पातञ्जलसूत्रमुल्लिखितम्, यथाह वाचस्पतिः—"योग इति विषयेण योगशास्त्रं पातञ्जलं लक्षयति" इति। (४।२।४६)। भासर्वज्ञकृतन्यायसारे हेय-तन्निवर्तक-आत्यन्तिकहान–हानोपायरूपो यादृशः प्रमेयविभागो वर्तते, सोऽपि योगसूत्रम् (२।१६–१७, २५–२६) अनुकरोति। न्यायसारग्रन्थेऽन्यत्रापि योगसूत्रच्छाया लक्ष्यते (पृ० ३५, ईश्वरलक्षणम्)।

**व्याकरणे योगसूत्रप्रसङ्गः**—व्याकरणग्रन्थेषु पातञ्जलसूत्रं क्वचिद् उद्धृतमस्ति। दृश्यतां लघुमञ्जूषा (बौद्धार्थनिरूपणं पृ० २३३ सभापतिसंस्क०)। अत्र विपर्ययो मिथ्याज्ञानम् (१।८) इति सूत्रमुद्धृतमस्ति। पुनश्च, पृ० २६६ इत्यत्र अनित्याशुचीत्यादिसूत्रमुद्धृतम्। ग्रन्थेऽस्मिन् अन्यान्यपि सूत्राणि उद्धृतानि (द्र०, पृ० ३००, ३४) योगभाष्यं च (पृ० ३४७, अन्यत्रापि) भाष्यपाठे क्वचित् पाठवैलक्षण्यमुपलभ्यते।

**वेदान्तसूत्रभाष्यकाराः, योगसूत्रं च**—प्रायेण सर्वैर्भाष्यकारैः योगसूत्राणि स्मृतानि, स्वमतपोषणाय योगमतखण्डनाय वा। प्राचीनतमो भाष्यकारः शङ्करोऽपि २।४।१२ भाष्ये प्रमाणविपर्ययेत्यादिसूत्रं (१।१।६) सस्मार। १।३।३३ भाष्येऽपि शङ्करेण 'स्वाध्यायादिष्टदेवतासंप्रयोग' इति योगसूत्रं निर्दिष्टम। २।१।३ सूत्रभाष्ये प्रायेण भाष्यकारा योगसूत्रं स्मरन्ति।

**शाक्तग्रन्थेषु योगसूत्रप्रसङ्गः**—शाक्तो भास्कररायो ललितासहस्रनामभाष्ये (पृ० ५६, ६४, ६५, ७४, ७६, ११४, १२४, १३४, १३७, १४०, १७६; योगभाष्यमपि, पृ० १५०) पातञ्जलसूत्राणि उदाजहार। अत्र क्वचित् पाठभेदा अवलोक्यन्ते, यथा, 'शब्दमात्रानुपाती वस्तुशून्यो विकल्प' इति पठ्यते (पृ० ६५) (द्र० योगसू० १।६)। क्वचिच्चांशिकरूपेण सूत्रं पठ्यते, यथा–'रागद्वेषाभिनिवेशाः क्लेशा इति योगसूत्रोक्ते'रिति कथनम् (पृ० ६४)।

**आचार्यान्तरधृतयोगसूत्रम्**—महाभारतटीकायां नीलकण्ठः स्वव्याख्यापुष्ट्यै योगसूत्रं निर्दिशति (शान्ति० १९५।१६ टीकायां योगसूत्रं भाष्यं चोद्धृतमस्ति) तथैव धर्मशास्त्रटीकाकारा अन्तराऽन्तरा मोक्षविद्यादिप्रसङ्गे योगसूत्राणि योगभाष्यं च स्मरन्ति, यथा माधवः पराशरस्मृतिटीकारम्भे एकाग्रादिचित्तभूमितत्त्वं संयमतत्त्वं च पातञ्जलीयमुदाजहारेति। निबन्धग्रन्थेष्वपि आत्मज्ञानप्रसङ्गे योगचर्याविवरणे च योगसूत्राण्युद्धृतानि। काव्यादिटीकाकारा अपि योगसूत्रं काव्यगतप्रसङ्गविशदीकरणाय उद्धरन्तीति दृश्यते।

**योगशास्त्रेषु योगसूत्रप्रसङ्गः**—बृहद्योगियाज्ञवल्क्यस्मृतौ दृश्यते—

क्लेशकर्मविपाकैश्च वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ॥ ४३ ॥
वाच्यो यज्ञेश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेन तु विज्ञातो वाच्य एव प्रसीदति ॥ ४४ ॥

( २।४३-४४ ) । इमौ श्लोकौ योगसूत्रानुसारिणौ इति प्रत्यक्षतो दृश्यते । अत्र श्रुतिरिति पदेन गम्यते काललुप्तायां कस्याञ्चित् शाखायां योगसूत्रवद् ईश्वरलक्षणमासीदिति । इयं शाखा सामवेदीया पातञ्जलशाखा भवितुमर्हति न वेति चिन्तनीयम् ।

हठयोगग्रन्थे पातञ्जलनिर्देशः--हठयोगप्रदीपिकाज्योत्स्नाटीकायां व्याधीत्यादियोगसूत्रं ( १।३० ) उद्धृतम् ( १।१७ ) । पुनश्च ४।१५ श्लोकव्याख्याने ऋतम्भरेति, श्रुतानुमानेति च ( १।४८-४९ ) सूत्रद्वयमुदाहृतम् । अत्र व्यासभाष्यमपि उद्धृतम्—"अत्र बादरायणकृतं भाष्यम्—श्रुतमागमविज्ञानम्........पुरुषगतो वेति" । तदिदं १।४९ सूत्रीयं भाष्यम् । अन्यत्रापि टीकायां पातञ्जलसूत्राण्युद्धृतानीति ।

बौद्धग्रन्थाः, योगसूत्रं च—यतो हि पातञ्जलशास्त्रं बुद्धतः प्राग्भावि, अतो प्राचीनतमेषु बौद्धग्रन्थेषु पातञ्जलशब्दवत् प्रयोगाः दृश्यन्ते । चित्त-स्मृति-संस्कार-क्लेश-संवेग-दुःख-निरोध-प्रत्यय-भवाविद्या-वासना-जात्यादयो बहवः शब्दाः पातञ्जलशास्त्रसम्मतेऽर्थे एव बौद्धैरपि प्रयुक्ता इति दृश्यते ( अर्थभेदश्च क्वचिदमौलिको दृश्यते ) । क्वचिच्च अभिधेयैक्ये सत्यपि पृथक् पारिभाषिकशब्दनिर्माणं बौद्धैः कृतम् । यथा—मैत्र्यादिसाधनं पातञ्जलीयम् अभिलक्ष्य 'ब्रह्मविहार'-इति पदस्य प्रयोगः । अत्रापीदं विज्ञेयं यद् बुद्धप्राचीनपञ्चशिखवाक्ये 'विहार'पदम् दृश्यते ( ये चैते मैत्र्यादयो ध्यायिनां विहाराः योगभाष्यम्, ४।१० ) तत एव बौद्धैः 'विहार'-पदं गृहीतम्, 'ब्रह्म'-इति पदं संयोजितं चेति प्रतिभाति । क्वचिच्च वचनसाम्यमपि दृश्यते, यथा—पातञ्जलसूत्रस्य ( श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्, १।२० ) शब्दतोऽनुकरणमपि प्राचीनेषु बौद्धग्रन्थेषु दृश्यते बहुधा ।

किञ्च, ध्यानादीनां यानि लक्षणानि बौद्धैर्भाषितानि, तेष्वपि पातञ्जलच्छाया दृश्यते, यद्यपि बौद्धग्रन्थगतदृष्टिर्न सर्वत्र न्यायेन संगच्छते ।

अपि च, ईश्वरप्रणिधानं यथा पातञ्जलयोगे, तथा बुद्धानुस्मृतिर्बौद्धग्रन्थेषु । अत्रानुस्मृतेर्यल्लक्षणं प्रदत्तं तत् प्रणिधानमेव लक्षयतीति व्यक्तमेव ।

बौद्धैः कर्मविभागविषये दृष्टजन्मवेदनीयम्, अपरपर्यायवेदनीयम् उपपद्यवेदनीयं च कर्मोक्तम् । पातञ्जले तु दृष्टादृष्टजन्मवेदनीयरूपः विभागो-

ऽस्ति ( २।१२ )। अत्र बौद्धाचार्यचिन्तनस्य मूलं खलु पातञ्जलमेवेति प्रतीयते। संकीर्णश्च बौद्धानुमतविभागः।

अत्रेदं विज्ञेयं यद् बौद्धाचार्याः पूर्ववर्तिशास्त्रेभ्य एव प्रधानतः स्वाभिमत-शब्दान् संजहुः। श्रमण[1]-श्रामणक-शब्दौ वैदिकौ। अन्येऽपि निर्वाणादयो बौद्धैर्व्यवहृताः शब्दा वैदिकसंप्रदायीयग्रन्थत एव संकलिताः, तेषाम् अर्थे च ईषत् परिवर्तनं कृतं बौद्धैः क्वचिदित्येवाभ्युपेयम्। अष्टाङ्गिकमार्गोऽपि वनपर्वणि कण्ठत उक्तः ( २।७८–७९ )। नेदं स्थलमर्वाचीनम्, अपि तु मूलभारतगतम्। अष्टाङ्गमार्गशब्दोऽपि ( वनपर्व २।७७ ) अत्र प्रयुक्तः। बौद्धशास्त्रे चत्वारि आर्यसत्यानि प्रोक्तानि संयुत्तनिकायादिषु, तदेतद् अपि दर्शनं योगदर्शनानुसारीति स्पष्टमेव। ( द्र० योगभा० २।१५ )

**जैनग्रन्थे पातञ्जलयोगप्रसङ्गः**—जैनदर्शनेऽपि ध्यानसमाध्यादयः शब्दाः आर्षग्रन्थत एव समाहृता इत्यभ्युपेयम्। जैना अपि मोक्षमार्गप्राप्तये ( मोक्ष-शब्दोऽपि बहुलं प्रयुज्यते जैनैः ) सम्यग्दर्शनस्य ज्ञानस्य चापरिहार्यतां वदन्ति। सवितर्कादिध्यानभेदा अपि जैनसूत्रेषु दृश्यन्ते। विषयेऽस्मिन् पं० सुखलाल-कृता पातञ्जलदर्शन-भूमिका द्रष्टव्या।

ये च सवितर्क-निर्विचार-सविचार-महाव्रत-कृतकारितानुमोदित-सोपक्रम-वज्रसंहनन-बल-केवलि-कुशल-क्षीणक्लेश-चरमदेह-ज्ञानावरणीयकर्मादयः शब्दाः जैनेषु प्रसिद्धाः, ते प्रायेण योगसूत्रदर्शितार्थेष्वेव प्रयुक्ताः।

पातञ्जलयोगस्य साक्षादुल्लेखः हरिभद्रसूरिणा कृतः ( योगबिन्दुग्रन्थे )। यशोविजयकृताध्यात्मसार-ग्रन्थेऽपि पातञ्जलयोगनिर्देशो वर्तते। योगविंशि-काटीकायां ( श्लो० ६६ ) 'योगमार्गज्ञैरध्यात्मविद्भिः पतञ्जलिप्रभृतिभि'-रित्युक्तम्। तथैव योगदृष्टिसमुच्चयटीकायामपि ( श्लो० १०० ) 'तथा चाह महामतिः पतञ्जलिः' इत्युक्तम्।

तत्त्वार्थाधिगमसूत्रेऽपि योगसूत्रसाम्यमस्ति। तच्चातात्त्विकम्, यथा—

'भवप्रत्ययो नारकदेवानाम्' ( १।२२ ), 'एकाग्रचिन्तानिरोधो ध्यानम्' ( ९।२७ ) इति। अविद्याविषये जैनदृष्टिर्बहुलं योगदर्शनानुसारिणीति ज्ञेयम्।

---

१. द्र० शतपथ० १४।७।१।२२, अस्यार्थः परिव्राडिति। बुद्धलक्षणं शान्ति-पर्वण्युक्तम् ( २८।३२ ) चित्तमलप्रक्षालनोपायार्थकः परिकर्मेति शब्दो बौद्धैर्बहुलं प्रयुज्यते इति सत्यम्, परं तु परिकर्मेति शब्दः आश्वलायनश्रौतसूत्रे विद्यते। लोकोत्त-रेति शब्दोऽपि महाभारते प्रयुक्तः ( शान्ति० ३२५।३९, कुम्भकोणसंस्क० )। तथैव 'द्विपदां वर' इति शब्दो बौद्धशास्त्रेषु सुप्रचलितोऽपि आर्षसंप्रदायप्रसिद्ध इति दृश्यते।

यशोविजयविदुषा पातञ्जलयोगसूत्रमाश्रित्य काश्चन द्वात्रिंशिका अपि विरचिताः—पातञ्जलयोगलक्षणविचारद्वात्रिंशिका, ईश्वरानुग्रहविचारद्वात्रिंशिका, योगद्वात्रिंशिकावतारः, क्लेशहानोपायद्वात्रिंशिका, योगमाहात्म्यद्वात्रिंशिका च।

इदं प्रतीयते यत् 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति योगसूत्रं ( १।४ ) तत्त्वार्थश्लोकवार्त्तिके विद्यानन्दस्वामिना स्मृतम्, यथाह सः—"यदपि द्रष्टुरात्मनः स्वरूपेऽवस्थानम् ध्यानं परममुक्तिनिबन्धनं तदपि····" (पृ० १८) इति।

पातञ्जलयोगानभिज्ञाः केचन विद्वांसः—गार्बेनामा कश्चिद् विद्वान् भणति यद् योगसूत्रगतमीश्वरप्रकरणम् (१।२३–२७) एतद् ग्रन्थबर्हिभूतमेव मन्तव्यम्, यत एतत्प्रकरणं एतद्दर्शनोचितदृष्टिविरोधीति ( The Philosophy of Ancient India पृ० १५ )। तदिदं मूर्खमनोहरं वाक्यम्, यतो हि ईश्वरचित्तादिकं सर्वं सांख्ययोगानुमोदितमेव। ऐशं स्वरूपं कीदृशमिति योगविद्यात एवावगन्तव्यमिति।

तथैव कश्चिद् ब्रूते—कठादिगता या योगविद्या, सा न पातञ्जलयोग एव ( I. P. पृ० ३३६ )। तदिदं चिन्तनीयं यतोहि कठादिषु योगजप्रज्ञाविज्ञेया ये अर्थास्ते सर्वे इहापि स्वीकृतास्तथैव। 'यत्र प्रमाणस्य प्रमेयस्य चैक्यं भवति, तत्र प्रमितेरैक्यं न' इति यदि कश्चिद् ब्रूयात् तर्हि न स विचक्षण इति स्वीकार्यमेव।

पूर्वे विद्वांसोऽपि पातञ्जलदर्शनज्ञानेऽनभिज्ञा आसन्। योगसम्मताऽविद्याविषये जैनविदुषां हेमचन्द्रादीनामाक्षेपा अज्ञतामूला एव ( द्र० अन्ययोगव्यवच्छेदिका, १५ )। तत्त्वार्थश्लोकवार्त्तिके विद्यानन्दिस्वामिकृते योगसम्मत-प्रधानस्वभावविषये य आक्षेपाः प्रदत्ताः, तेऽपि योगाज्ञानमूलका एवेति। शास्त्रवार्तासमुच्चये हरिभद्रकृते योगसम्मत-भोगविषये या समीक्षा कृता, सापि योगतात्पर्यमज्ञात्वैव कृतेति दृश्यते। विस्तरस्तु योगविद्येतिहास-ग्रन्थे द्रष्टव्यः।

योगसूत्ररचनारीतिः, सौत्रपदप्रयोगश्च—ग्रन्थोऽयं सूत्रपद्धत्या रचितः, अतः सूत्ररचनारीतिमनुसृत्य अनुवृत्तिपद्धतिरप्याश्रिता सूत्रकृता। अत एव १।३६ व्याख्याने भाष्यकार आह—"प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्तत" इति। वाचस्पतिरपि बभाषे—"अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिग्रहणमाकृष्य संपादयेद् इत्यर्थप्राप्तेन संबन्धनीयमिति" ( १।३४ )। अत एव वृत्तिरित्यनुवर्तमाने 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति सूत्रे ( १।१० ) पुनर्वृत्तिग्रहणस्य प्रयोजनं व्याख्यातमाचार्यैः।

क्वचिच्च सूत्रेऽव्ययपदानि भिन्नक्रमतया स्थापितानि। 'ता एव सबीजः समाधिः' ( १।४६ ) इति सूत्रीय एवकारो भिन्नक्रम इति वाचस्पतिः।

यथाह—"एवकारो भिन्नक्रमः, सबीज इत्यस्यानन्तरं द्रष्टव्यः" । कथं भिन्न-क्रमतयाऽयं शब्दः पठित इति प्रश्न उदेति । मन्ये—श्लोकमयं किमपि वाक्यम् अस्य सूत्रस्याधारभूतं, श्लोके तु छन्दोरक्षार्थम् एवकारो भिन्नक्रमतया पठित आसीत्, तदनुरोधेन इहापि तथैव पठितः । भिन्नक्रमपठनस्य नान्यो हेतु-रुपलभ्यते । अष्टाध्याय्यामपि चकारादयो भिन्नक्रमतया पठिताः, तत्रापि अयमेव हेतुरुच्यते ( द्र० संस्कृतव्याकरणशास्त्र का इतिहास, भाग १ अ० ५ )।

क्वचिच्चार्थक्रममनादृत्य सूत्रं प्रणीतम्। यथाह वाचस्पतिः—"तत्र च ग्रही-तृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नादर्तव्यः। एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासो नादरणीय इति सर्वं रमणीयम्" इति ( १।४१ तत्त्ववै० ) ।

अनुशयीति पदं पतञ्जलिः प्रायुङ्क्त—'सुखानुशयी राग' इति (१।७) । अत्रानुशयीत्यत्र ताच्छील्यार्थे णिनिरिनिर्वा मत्वर्थीय इति विचारितं वैयाकरणेन सायणेन ( द्र० सर्वदर्शनसंग्रहः, पृ० ३६३–३६४ ), सिद्धान्तितं च यदत्र तद्धितेनिः प्रत्यय एव, न णिनिः ।

तथैव ४।५ सूत्रगतम् 'अनेकेषाम्' इति पदं शब्दशास्त्रदृशा साधु, न वेति विचारितं सायणेनैव माधवीयधातुवृत्तौ । यथाह—"अथ एकशब्दस्य ······· सिध्यति बहुवचनम्, न बहुव्रीहाविति निषेधात् सर्वनामकार्यं शीभावो न सिध्यति । अथवा, एवं समर्थनीयः—एकशब्दोऽसहायवचनः, अनेके सहाया इत्यर्थः । तथा च योगपातञ्जले—चित्तमेकमनेकेषामिति प्रयुज्यते" इति ( पृ० २४६ ) । केचित् पुनः अनेकेषामितिपदं महाभाष्यविरुद्धमिति मत्वा न खलु महाभाष्यकारो योगसूत्रकार इत्यभिदधुः ।

सूत्रपद्धत्या रचितत्वात् सूत्रोपात्तपदसार्थक्यविचारोऽपि पूर्वाचार्यैः कृतः । अत एव 'चित्तवृत्तिनिरोध' ( १।२ ) इत्यत्र 'सर्वचित्तवृत्तिनिरोध' इति कथं न कथितमिति विचारितो भाष्यकारेण । अस्माभिरपि मन्यते यत् 'तदर्थ एव दृश्यस्यात्मा' ( १।२१ ) इत्यत्र दृश्यात्मेति वक्तव्ये दृश्यस्यात्मेति ब्रुवन् सूत्रकारः 'दृश्यमेकम्' इति सिद्धान्तमभ्युपैति । वाचस्पतिश्च 'दृग्दर्शनशक्त्योरेकात्मते-वास्मिता' ( २।६ ) इत्यत्र शक्तिपदोपादानस्य रहस्यं दर्शयामास । 'श्रद्धा-वीर्यस्मृतिसमाधिप्रज्ञापूर्वक·····' सूत्रे ( १।२० ) श्रद्धादीनां क्रमिकं स्थापनं कार्यकारणात्मकतामेषां श्रद्धादीनां दर्शयतीति व्याख्यातारः । एवमन्येष्वपि सूत्रेषु चिन्तनीयं बुधैः ।

**योगसूत्रव्याख्यानानि**—योगसूत्रस्य उपलब्धानि सर्वाणि व्याख्यानानि नातिप्राचीनानीति । प्राचीनव्याख्यान संबद्धा चर्चा योगभाष्यप्रसङ्गे करिष्यते। योगसूत्रव्याख्यानानां प्रचलितानां विवरणमिह प्रस्तूयते ।

भावागणेशकृतदीपिका—भावागणेशः खलु विज्ञानभिक्षुशिष्य इति प्रसिद्धिः । गुरोर्दृष्टिमनुसृत्यानेन ग्रन्थः प्रणीत इति एतद्व्याख्यानतोऽवगम्यते । इयं दीपिका-व्याख्या अतिविस्तरा, स्पष्टा च विशदा च । योगदीपिका-पदेनेमां टीकां ग्रन्थकारः स्वयमेव व्यवहरति ( द्र० पुष्पिका-भावागणेश-कृतायां योगदीपिकायां समाधि-पादः प्रथमः ) । अत्र योगवार्त्तिकगता दृष्टयोऽवलोक्यन्ते सर्वतः । आह च भावागणेशः ( व्याख्यारम्भे )—

'भाष्ये परीक्षितो योऽर्थो वार्त्तिके गुरुभिः स्वयम् ।
संक्षिप्तः सिद्धवत् सोऽस्यां युक्तिसूक्ताधिका क्वचित् ॥' इति ।

दीपिकायामन्तरान्तरा भिक्षु-वार्त्तिकं च स्मृतम् । यथा—"इति वार्त्तिके गुरुचरणैः प्रसाधितं प्रपञ्चितं च" ( १।४ ); "अत्र प्रमात्रादिविभागे वार्त्तिककारिकाः" ( १।७ ) इति । योगवार्त्तिके भिक्षुर्यथा बभाषे, तथैवात्र संक्षेपेण भावावागणेश आहेति प्रायेणावलोक्यते ।

योगसूत्रटीकायामन्तराऽन्तरा मतान्तराणामुल्लेखोऽप्यस्ति । यथाह—'विज्ञानवादं निरस्य दृष्टिसृष्टिवादं निरस्यति ( ४।१६ ) 'शुद्धतार्किकास्तु इमामपि ( निद्रां ) वृत्तिं स्वप्नमध्ये प्रवेशयन्ति' ( १।१० ) इति ।

योगविद्यायां कानिचन विचारणीयानि मतान्यनेन भाषितानि, यथा—

'अचेतनं चेतनाधिष्ठितमेव प्रवर्तते इति नियमस्तु अस्माभिर्नेष्यते, परमेश्वरस्य वैषम्यनैर्घृण्यापत्तेः' ( ३।३ ); 'अतो निःशेषाविद्याक्षयेऽपि जीवन्मुक्तानां प्रारब्धयोग उपपद्यते । अत्र प्रमाणं च वार्तिके' ( २।१३ ) इति ।

अस्य कालस्तु विज्ञात एव । विज्ञानभिक्षोः कालः खीष्टीयचतुर्दशशतकमध्यमभाग इति निश्चप्रचम् ( सांख्यदर्शन का इतिहास, पृ० ३०४ ), अतः तत्समकालभव एष इत्यपि सिद्धमेव। केचनास्य काल १५७५ ई० मन्यन्ते, तेषां मते भिक्षोः कालोऽप्यर्वाचीन एव । नायं पक्षो युक्त इति भिक्षुकालनिरूपणावसरेऽभिधास्यते।

'न च तत् सालम्बनमि'ति सूत्रं नानेन सूत्ररूपेण स्वीकृतमिति दृश्यते ।

एतत्कृता ग्रन्थाः—तत्त्वयाथार्थ्यदीपनम् ( तत्त्वसमासव्याख्यानभूतम् )-व्याख्यानमिदं पञ्चशिख-व्याख्यावलम्बनेन कृतमिति स्वयमेवाह भावागणेशो ग्रन्थादौ ( आलम्ब्य व्याख्यां पञ्चशिखस्य च ) । व्याख्यानेऽस्मिन्नैकपुराणवचनानि स्मृतानि, पञ्चशिखवाक्यान्यपि संगृहीतानि ( पृ० ७२, ८१, ८२ ) ।

'भोजराजकृत-भोजवृत्तिः—वृत्तिरियं प्रसिद्धा प्रचलिता सुविशदा योगविद्योपकारिणी च । राजमार्तण्डपदवाच्येयमिति विज्ञायते । ग्रन्थपुष्पिकायामपि ,धारेश्वर-भोजराज-विरचितायां राजमार्तण्डाभिधानायाम्' इत्येव वाक्यमस्ति ।

भोजोऽयं रणरङ्गमल्लनामधेयः, यथाह स्वयमेव वृत्तिकारः—"तस्य श्रीरण-रङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः' ( ग्रन्थारम्भे पञ्चमः श्लोको द्र० )। ग्रन्थ-कारो व्याकरणे वैद्यके चापि व्याख्यानं रचयामासेति तद्वचनतो विज्ञायते ( 'शब्दानामनुशासनं विदधता' इति श्लोको द्रष्टव्यः, ग्रन्थादौ )। योगसूत्रका-रोऽहिपतिः पतञ्जलिरेव महाभाष्यादीनां चापि कर्तेत्यप्यस्यमतम्। तदिद-मनेनैव श्लोकेन व्यक्तं भवति। मतमिदं सत्यं नवेत्यन्यत्र प्रपञ्चितम्।

अनेन 'न चैकचित्ततन्त्रमि'त्यादि वचनं ( ४।१६ ) सूत्रत्वेन न स्वीकृत-मित्यवगन्तव्यम्।

ग्रन्थकृता च परेषां दुर्व्याख्यानानां स्वरूपं ग्रन्थादौ 'दुर्बोधं यदतीव....' इत्यादिश्लोके प्रकटीकृतम्, स्वव्याख्यानं च प्रशंसितम् ( 'उत्सृज्य विस्तरमुदस्य विकल्पजालं फल्गु प्रकाशमवधार्य च सम्यगर्थान्' इत्यादिः ग्रन्थारम्भस्थः श्लोको द्रष्टव्यः )।

अयं शिवस्य भगवतो भक्त इति प्रतिभाति। अत एव 'भूतनाथः स भूतये' ( ३।१ मङ्गलाचरणश्लोकः ) 'देहार्धयोगः शिवयोः....' ( ग्रन्थादि-मङ्गलपद्यम् ) इति सश्रद्धं निर्दिशति।

अनेन विन्ध्यवासिमतमुद्धृतम्, यथोक्तम्—अनेनैवाभिप्रायेण विन्ध्य-वासिनोक्तम् 'सत्त्वतप्यत्वमेव पुरुषतप्यत्वम् इति' ( ४।२३ )।

अस्यां वृत्तौ मतान्तराण्यपि क्वचिदुल्लिखितानि दृश्यन्ते। ग्रन्थान्ते आत्मन आनन्दमयत्वमधिकृत्य अद्वैतिनां नैयायिकानामन्येषामपि च मतानि खण्डि-तानि। अन्यत्रापि स आह—"केचिद्धि चेतनामात्मनो धर्मम् इच्छन्ति" इति ( २।२० )।

व्याख्यानेऽस्मिन् योगविद्यागताः सूक्ष्मा अर्था अपि क्वचिन्निर्दिष्टाः। दिङ्मात्रमुदाह्रियते—२।२३ सूत्रव्याख्याने द्रष्टृ-दृश्य-संयोगस्वरूपं यथा वर्णितम्, तेनास्य गभीरान्तर्दृष्टिर्व्यज्यते। विशोकास्वरूपविषयेऽयमाह—"ज्योतिःशब्देन सात्त्विकः प्रकाश उच्यते" ( १।३६ )। सम्यगभिहित-मिदमित्यन्यत्र प्रपञ्चितम्। १।२१ सूत्रगत-'संवेग-'पदस्यार्थोऽनेनैव विशदी-कृतः, नान्यैः।

क्वचिच्च सूत्राक्षरार्थविषये साधूक्तमनेन। १।३३ सूत्रे यानि सुखदुःखा-दीनि पदानि सन्ति, तैः शब्दैस्तद्वन्तः प्रतिपाद्यन्त इति स्पष्टमुक्तम्। दृष्टि-रियं समीचीनेति न संशयलेशोऽपि।

व्याकरणे, धर्मशास्त्रे, शैवदर्शने, ज्योतिषे, वास्तुविद्यायां रणविद्यायां चास्य ग्रन्थाः प्रसिद्धाः। मिताक्षराकारो योगी विज्ञानेश्वरोऽस्य सभायामासीदिति

प्रसिद्धिः । शूलपाणिरघुनन्दनादिभिरेतद्वचनान्युद्धृतानि ( पृ० ६७०—६७१ सनत्सुजातीयमध्यात्मशास्त्र-ग्रन्थस्य वंगभाषामयं संस्क० ) ।

राज्ञोऽस्य जीवनवृत्तान्तं मेरुतुङ्गकृतप्रबन्धचिन्तामणौ, बल्लालकृतभोजप्रबन्धे, कीर्तिकौमुद्यामन्यत्र च वर्तते ( वैद्यकवृत्तान्तो नामा वंगभाषामयो ग्रन्थो द्रष्टव्यः पृ० २१५-२१५ )। धाराधीशोऽयं परमारवंशीयः; महाराजसिन्धुलपुत्रो जयसिंहपिता च । भोजस्यास्य राज्यकालः १०७५-१११० विक्रमसंवत् भवितुमर्हतीति निश्चप्रचम् ( सं. व्या० इ० भाग० १ पृ० ४४० ) ।

राजमार्तण्डवृत्तिर्ललितासहस्रनामभाष्ये निर्दिष्टा नामतः ( पृ. ५६ ) ।

रामानन्दयतिकृत योगमणिप्रभावृत्तिः—इयं भाष्यानुगा वृत्तिरिति ग्रन्थकृदेवाह । वस्तुतः भाष्यार्थबोधनमत्र यथास्थानं दृश्यते, भाष्यवचांसि च बहुत्रोद्धृतानि ( क्वचिच्च भाष्यवचनेनैव सूत्रं व्याख्यातमनेन ( १।२८ ) ।

योगसुधाकर-वृत्त्या सहास्याः साम्यमपि क्वचिद् दृश्यते । भोजवृत्तिरप्यनेनानुसृतेत्यवलोक्यते । वाचस्पतिकृत-तत्त्वकौमुदीगतमेकं वाक्यमप्यनेन स्मृतम् ( नाम तु नोक्तम् )—"एवं प्रतिक्षणं परिणामिनः सर्वे भावा ऋते चितिशक्तेरिति संक्षेपः" ( ३।१३ ) । वाक्यमिदं पञ्चम""सांख्य-कारिकाव्याख्यानेऽस्ति ।

अयं खलु गोविन्दानन्दभगवत्-पूज्यपाद-शिष्य इति ग्रन्थान्तिमपुष्पिकातो विज्ञायते । यद्ययं रत्नप्रभाकर्तुः गोविन्दानन्दस्यान्तेवासीति स्यात्, तर्हि १६१७ शताब्दी अस्य काल इति कथयितुं शक्यते। गोविन्दानन्दशिष्यः रामानन्दसरस्वती ब्रह्मामृततरंगिणी-वृत्ति विवरणोपन्यासं च प्रणिनाय । मणिप्रभाकारः रामानन्द एवायमिति चिन्तनीयो विषयः ।

अयं योगसूत्रवृत्तिकारः खलु शिवरामसरस्वति-शिष्य इति गुरुपदहालदारमहोदयो वक्ति ( सनत्-सुजातीय-परिशिष्टम्, पृ. ६६० )। सूचनेयं कुतोऽधिगता हालदारमहोदयेनेति न ज्ञायते ।

नागोजिभट्टकृतवृत्तिः—इयं वृत्तिर्बहुत्र मुद्रिता, विद्वत्समाजे प्रचलिता च। स्वयमेव ग्रन्थकारो व्याख्यामेनां वृत्तिपदेन व्यवहरति ( श्रीनागोजिभट्टीयायां वृत्तौ प्रथमः पादः ) । अयं वृत्तिकारः प्रसिद्धाद् वैयाकरणाद् न भिद्यत इति कृत्वा तस्य समय इतिवृत्तं च निश्चितमेवेति निर्धारयामः । अयं व्याकरणे धर्मशास्त्रे, अलंकारेऽपि बहून् ग्रन्थान् प्रणिनाय इति नातिरोहितं विदुषाम् । अस्यां वृत्तावप्यस्य शब्दशास्त्रज्ञानं सन्दृश्यते, अत एव भावागणेशमनुकुर्वन्नपि अयं 'कालिक' इत्येव प्रयुक्तवान्, न पुनः भावागणेशप्रयुक्तं कालीन-शब्दम् ( ३।२५ वृत्तिर्द्रष्टव्या ) ।

अस्यां वृत्तौ भोजवृत्तिर्भावागणेशवृत्तिश्च बहुत्रानुकृता । ( द्र० १।४६; २।५; २।६, २।१२, ३।२५ )। कचिच्च, केचिदित्युक्त्वा गणेशमतं संगृहीतम् ( ४।३, ४।५ ) । कण्ठतोऽपि भोजराजमतं निर्दिष्टं स्वीकृतं च ( ४।३ ) वाचस्पतिमिश्रवचनमपि क्वचित् परामृष्टम् ( २।६ ४।१७, ) । बहुत्र व्यास-भाष्यगतवचांस्यविकलरूपेण अवयुत्यनुवादेन च लक्षितानि ( १।४, १।७, १।२४, २।१३, ४।१०, ४।२१, ४।२३ ) । वृत्तिकृतेदमपि प्रत्यपादि यत् २।६ सूत्रं तु परमार्थतो भाष्यमेव वाचस्पतिदृष्ट्या—"ते प्रतिप्रसवहेयाः सूक्ष्मा इति तु भाष्यमेव न सूत्रमिति वाचस्पतिस्वरसः" ।

अस्यां वृत्तौ तत्त्ववैशारद्याः प्रभावः सर्वत्र देदीप्यते । भोजवृत्तिरपि बहुत्रानुसृता ।

अनेन 'न च तदि'ति सूत्रं ( ३।२० ) न सूत्रत्वेनाभ्युपगतमिति ज्ञेयम् ।

क्वचित् सूत्रार्थविषये विशिष्टं कथनमुपलभ्यते । यथा—चतुर्व्यूहपदे व्यूह-पदस्य कीदृशं सार्थक्यमित्यत्राह–"उपकरणसंग्रहाय सर्वत्र व्यूहपदं राश्यर्थकम्" इति ( २।१५ ) । परिकर्मण ईदृशं लक्षणं प्रदत्तम्–"एकाग्रताहेतुश्चित्तसंस्कारः परिकर्म" इति । अनेन चित्तवृत्तयो द्रव्यत्वेनाभ्युपगताः, यथोक्तम्—"वृत्तयो-ऽपि हि दीपशिखा इव द्रव्यरूपाः भङ्गुराश्चित्तपरिणामा" इति । क्वचिदनेन परमतं खण्डितम् ( द्र० ४।३४ वृत्तिः ) ।

वैक्रमसंवत् १७७२ काले जयपुराधीशोऽश्वमेधं चकार, तत्रायमाहूतोऽपि न गतवान् इत्यहो अस्य गाम्भीर्यम् । शृङ्गवेरपुराधीशो रामचन्द्रोऽस्य पालक आसीदिति विज्ञायते तद्ग्रन्थपरिशीलनेन ।

अनन्तदेव( पण्डित )कृत-चन्द्रिकाव्याख्या—व्याख्येयं प्रकाशिता । इय-मतिसंक्षिप्ता । नास्यां योगविद्यायाः सूक्ष्माणि तथ्यानि विवृतानि ।

२।४७ सूत्रे पाठभेदोऽनेन दर्शितः, यथाह सः—"अनन्त-आनन्त्येति पाठ-द्वयेऽर्थद्वयम् । प्रथमपाठे शेषसमापत्तिः, द्वितीय आकाशसमापत्तिरि"ति । तथैव ४।३३ सूत्रपाठ एतन्मते 'परिणामोऽपरान्तनिर्ग्राह्यः क्रमः' इति प्रतिभाति। अत्यन्तमर्वाकालिकोऽयम् ।

सदाशिवेन्द्रसरस्वतीकृत-योगसुधाकरव्याख्या—मुद्रितेयं वृत्तिः । इयमपि व्याख्या संक्षिप्ता, अत्र च क्वचिद् योगविद्या-विषयकाणि सूक्ष्माणि तथ्यानि विवृतानि (द्र. १।३६ व्याख्या)। मणिप्रभाटीकाप्रभावोऽस्या उपरि देदीप्यत एव।

अस्यां वृत्तौ योगियाज्ञवल्क्यग्रन्थः स्मृतो बहुधा ( २।३२; ३।१ ) । योगवासिष्ठोऽपि सकृत् ( २।३५ ) ।१।२३ सूत्रव्याख्याने 'तप्यं सत्त्वं बुद्धि-

भावेन वृत्तम्.........' इत्यादिका काचित् कारिकाऽप्युद्धृता। अर्वाक्कालिकोऽयं ग्रन्थकारः।

नारायणतीर्थकृत-योगचन्द्रिकाव्याख्या—व्याख्येयं मुद्रिता। इयं विशदा विस्तृता च। अत एव ग्रन्थकृता 'सूत्रार्थबोधिनी'ति नाम्नी काचिदपरा व्याख्यापि निरमायि, सापि चन्द्रिकया सहैव प्रकाशिता।

नारायणतीर्थः खलु नैकग्रन्थप्रणेता। इमे एतत्कृता ग्रन्थाः—

( क ) सिद्धान्तबिन्दुग्रन्थस्य लघुव्याख्या।

( ख ) सांख्यकारिकायाश्चन्द्रिकाटीका।

( ग ) न्याय-कुसुमाञ्जलि-टीका।

( घ ) ब्रह्मसूत्रस्य विभावना-टीका।

( ङ ) भाषापरिच्छेदग्रन्थस्यापि एतद्विरचिता टीकाऽस्तीति कथ्यते।

अस्य समयः खलु १७१८ विक्रमसंवदित्यैतिहासिकाः। श्रीरामगोविन्दतीर्थोऽस्य गुरुर्यथाह नारायणः सांख्यकारिकाटीकारम्भे—

"श्रीरामगोविन्दसुतीर्थपादकृपाविशेषादुपलभ्य बोधम्।
श्रीवासुदेवादधिगत्य सर्वशास्त्राणि वक्तुं किमपि स्पृहा नः॥" इति।

अस्यान्तेवासी काश्मीरकः सदानन्दो योऽद्वैतब्रह्मसिद्धिग्रन्थं रचयामास। नारायणतीर्थस्य वाक्यं हठयोगप्रदीपिकाटीकायामुद्धृतं वर्तते ( १।४ )।

सांख्यकारिकाव्याख्यायामनेन एका विशिष्टा सूचना प्रदत्ता। सांख्यीयषष्टिपदार्थगणनापराः केचिच् श्लोका अनेन उद्धृताः, यत्र पदार्थगणनाऽभिनवरीत्या कृता[१]। प्रचलिता गणनारीतिः ( द्र० तत्त्वकौमुदी ७२ धृतं राजवार्त्तिकम ) खल्वन्यैव[२], यद्यपि उभयोरर्थसाम्यमप्यस्ति।

---

१. पुरुषः प्रकृतिर्बुद्धिरहङ्कारो गुणास्त्रयः।
तन्मात्रमिन्द्रियं भूतं मौलिकार्थाः स्मृता दश॥
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः।
करणानामसामर्थ्यमष्टाविंशतिधा मतम्॥
इति षष्टिः पदार्थानाम् अष्टाभिः सह सिद्धिभिः। ( ७२ कारिकाटीका )

२. प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः॥
करणानामसामर्थ्यमष्टाविंशतिधा स्मृतम्।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः॥

यशोविजयकृता योगसूत्रवृत्तिः—वृत्तिरियं श्रीजैन-आत्मानन्दसभातः ( भावनगरतः ) प्रकाशिता । अस्यां वृत्तौ २७ सूत्राण्येव व्याख्यातानि—प्रथमपादे—२, ११, १६, १८, १६, २६, ३३, ३४, ४६, ४६ सूत्राणि । द्वितीयपादे—१, ४, ६, १०, १३, १५, १६, ३१, ३२, ५५ । तृतीयपादे—५५ । चतुर्थपादे—१२, १४, १८, २३, ३१, ३३ ।

अत्र सूत्रशब्दान् अधिकृत्य तेषां संगतिश्च प्रायेण विचारिता (द्र० ११२) । क्वचिच्च दोषा आविष्कृताः । यथा—विकल्पनिद्रास्मृतीनां प्रमाणे विपर्यये च अन्तर्भावो भवति, अतो द्वितयी चित्तवृत्तिरित्येव वक्तव्यमिति । क्वचित् सांख्यदृष्टिः खण्डिता—यथा ४।१८ वृत्तौ । क्वचिच्च जैनप्रक्रियाश्रयेण योगमतं विचारितम्, ( द्र० १।१६, १।१८, २।३१ वृत्तिः ) । २।१६ वृत्तौ योगसम्मतः सत्कार्यवादो दूषितः । २।५५ वृत्तौ उक्तं यद् योगसम्मता इन्द्रियाणां परमा वश्यता न चित्तनिरोधेन भवति, प्रत्युत ज्ञानेनैव । ३।५५ वृत्तौ उक्तं यज् जैननये चेतनमपि उत्पादव्ययध्रौव्यधर्मयुक्तमिति । ४।१४ वृत्तौ उक्तं यत् जैननयदृष्ट्यैव सांख्यीयं मतं समीचीनं भवति ।

टीकाकारो यशोविजयो नैकग्रन्थकारो जैनसंप्रदाये प्रसिद्धः प्रमाणपुरुषः । अयं विक्रमसंवत् १७-१८ शतके प्रादुर्बभूवेति ज्ञायते ।

योगसूत्र-व्याख्यान्तराणि—अन्यान्यपि योगसूत्रव्याख्यानानि सन्ति । एतेषां व्याख्यानानामेका सूची राजेन्द्रलालमित्रसम्पादित-योगदर्शनग्रन्थतो ग्रन्थान्तरतश्च प्रस्तूयते । इमानि अमुद्रितानि व्याख्यानानि, कानिचन तु मुद्रितानि, तान्यपि न गम्भीरार्थप्रकाशकानीति कृत्वा ग्रन्थविस्तरभयाच् च न विशिष्टं विवरणं दीयते । अपूर्णेयं सूचीति विज्ञेया ।

१—उदयशंकररचितयोगसूत्रवृत्तिः ।
२—उमापतिकृतयोगसूत्रवृत्तिः ।
३—गणेशदीक्षितकृत-पातञ्जलवृत्तिः ।
४—ज्ञानानन्दकृतयोगसूत्रविवृतिः ।
५—नारायणभिक्षुकृतयोगसूत्रगूढार्थद्योतिका ( १६०० ई० ) ।
६—भवदेवकृत—पातञ्जलीयाभिनवभाष्यम् ।
७—भवदेवकृत—योगसूत्रवृत्तिटिप्पणम् ।
८—महादेवकृत–योगसूत्रवृत्तिः ( १६३० ई० ) ।
९—रामानुजकृत-योगसूत्रभाष्यम् ।
१०—वृन्दावनशुक्लकृत-योगसूत्रवृत्तिः ।
११—शिवशंकरकृत-योगवृत्तिः ।

१२—सदाशिवकृत-पातञ्जलसूत्रवृत्तिः ।

१३—श्रीधरानन्दयतिकृत-पातञ्जलरहस्यप्रकाशः ।

१४—बलदेवमिश्रकृत-योगप्रदीपिका ।

१५—स्वामिनारायणकृत-किरणावलीटीका ।

१६—स्वामिहरिप्रसादकृत-योगसूत्रवैदिकसूत्रवृत्तिः ।

केषुचिद् ग्रन्थेषु योगसूत्रव्याख्यारूपेण क्षेमानन्ददीक्षितकृत-नवयोगकल्लोल-नामा ग्रन्थोऽपि निर्दिष्टः । अयं न्यायरत्नाकरापरनामधेयः । स च गौतमसूत्रव्याख्यानरूपो ग्रन्थ इति ग्रन्थान्तिमपुष्पिकातो विज्ञायते ( सांख्य-दर्शन का इतिहास पृ० ३२३ ) । ईसवीयचतुर्दशशतकानन्तरमेवास्य काल इति ( पृ० ३२४ ) ।[1]

---

१—आंग्लभाषायां हिन्दीबंगमहाराष्ट्रादिभारतीयभाषासु, प्रतीच्यभाषान्तरेष्वपि योगसूत्रानुवादाः योगसूत्रव्याख्यानानि च कृतानि । ग्रन्थविस्तरभयाद् तेषां नामादिकं नात्र प्रस्तूयते ।

# तृतीयं प्रकरणम्

## व्यासभाष्यम्, तद्व्याख्यानानि च

**योगभाष्यम्, तत्प्रणेता च**—योगभाष्यमिदं सांख्यप्रवचनभाष्यं व्यासभाष्यं चेत्युच्यते। सांख्यप्रवचनेति शब्देनेदं ज्ञायते यदिदं शास्त्रमपि सांख्यविद्याया एकदेश एव। दृष्टिरियं प्राक् प्रदर्शिता। योगजनितप्रज्ञया सांख्यीयानां पदार्थानां साक्षात्कारो भवति, योगसिद्धेन कपिलेन सांख्यविद्यादौ प्रोक्ता चेति कृत्वा योगशास्त्रं सांख्यशास्त्रान्तर्गतमेवेति निर्णीयतेऽस्माभिः।

व्यासेन रचितत्वात् व्यासभाष्यमिति विज्ञायते। कोऽयं व्यासः, किन्तस्य नाम (यतो हि पुराणेषु बहूनि व्यासनामानि श्रूयन्ते) इति प्रश्न उदेति। पूर्वाचार्यास्तु कृष्णद्वैपायनो व्यास एवास्य प्रणेतेत्यभिदधुः। यथाह वाचस्पतिः—'वेदव्यासेन भाषिते भाष्ये' (तत्त्ववैशारद्यारम्भे)। भिक्षुरपि मतमिदं पुष्णाति, अत एव तेन 'वेदव्यासमुनीन्द्रबुद्धिखनितः' 'सर्ववेदार्थसारोऽत्र वेदव्यासेन भाषित' इत्यादीनि वाक्यान्युक्तानि (योगवार्त्तिकारम्भे)।[1]

आधुनिका गवेषकास्तु नेदं मतमुररीकुर्वन्ति। ते वदन्ति—कृष्णद्वैपायनकाले विज्ञानवादादीनामसत्त्वात् न सोऽस्य भाष्यस्य कर्ता भवितुमर्हति। ग्रन्थेऽस्मिन् अर्वाचीनबौद्धादिवादखण्डनात् नामतस्तद्वादोल्लेखनाच्च ग्रन्थोऽयमर्वाक्कालिकेन केनचिद् व्यासोपाधिकेन योगविद्याविशारदेन रचित इत्येव युक्तं मतम्। एते खलु योगभाष्यभाषाया निकृष्टत्वम् (महाभारतापेक्षया) अभिदधुः। वस्तुतो व्यासभाष्ये बौद्धमतानि बौद्धसम्प्रदायनामभिः बौद्धव्यवहृतपारिभाषिकशब्दैः सहोक्तानि, खण्डितानि चेति निष्प्रपञ्चम्। बौद्धग्रन्थसदृशी भाषाऽप्यत्र बहुत्र लक्ष्यते। अतो बौद्धकाले यो व्यासपदवीयुत आसीत्, तस्येयं कृतिरिति कथनं नासमीचीनं भवति। अस्माकमप्येषैव दृष्टिः।

**पूर्वोक्तमतसमीक्षा**—एवं सत्यपि प्रश्नोऽयं जागर्ति यदि नाम व्यासपदवीभूषितेन व्यासपरम्परासिद्धेन केनापीदं भाष्यं विरचितमिति कथ्यते, तर्हि इदं वैष्णवादिसर्वसम्प्रदायसाधारणं भवेदेव सर्वसम्प्रदायैरेकवाक्यतया व्यासप्रामाण्याभ्युपगमात्। यतो हि नेदं भाष्यं वैष्णवादिभिः प्रमाणत्वे-

---

१. श्री गुरुपदहालदारमहोदयः कृष्णद्वैपायनव्यासप्रणीतमिदं भाष्यमिति मन्यते (व्याकरणदर्शनेर इतिहासनामा वंगभाषामयो ग्रन्थो द्रष्टव्यः)। शांकरभाष्यविवरण-सम्पादकानां मतमपीदमेव।

नाभ्युपगतम्, न वा रामानुजमध्वादिभिरस्य वचनानि क्वापि स्मृतानि, अतो गम्यते यदिदं भाष्यं व्यासप्रणीतम् इति प्रसिद्धिः दार्शनिकसंप्रदायेषु नासीदिति।

अपि च—कृष्णद्वैपायनतः प्राग् बहवो व्यासा बभूवुरिति पुराणेषु दृश्यते[१], परन्तु ततः पश्चादपि व्यासपदवीभाजां सत्ता कलिकाले भविष्यतीति न क्वापि कथितम्। अर्वाचीने काले 'व्यास' पदस्य 'पुराणवाचकः, पुराणकथकः' इत्येवार्थो जातः[२], नेदं पदं दर्शनविद्याचुञ्चुषु प्रयुज्यते इति व्यक्तमेव।

किञ्च—'बौद्धयुगे यदि कश्चिद् योगिप्रवरो व्यास आसीद्' इति बलादभ्युपेयते, तर्हि सर्वजनप्रसिद्धस्यास्य नामादिकं सर्वं कथं परम्परायां न स्मृतम् इति जायते विचारणा। कथं वा व्यासैकशरणे शंकरमध्वादिसंप्रदाये भाष्यमिदं न प्रमाणत्वेनाभ्युपगतम्?

अपि च—बौद्धयुगस्थितेन 'व्यासेन' कथं पञ्चशिखवचांसि तद्ग्रन्थ उद्धृतानीति चिन्तनीयं सर्वैः। जनदेवजनककालिकः खलु पञ्चशिखः, तस्य च ग्रन्थो बहोः कालात् पूर्वं लुप्तो जातः। कथं च तद्ग्रन्थं दृष्ट्वा बौद्धकालिको व्यासो भूयांसि तद्वचांस्युद्धृतवानिति?

**व्यासभाष्यगतव्यासशब्दार्थः**— पूर्वोक्तदोषनिराकरणार्थमस्माभिश्चिन्त्यते यत् सूत्रकृता पतञ्जलिना स्वयमेव किमपि व्याख्यानं कृतं सूत्राणाम्। इयं शैली प्राचीनकाले बहुधा दृष्टा। केनापि तत्कालभवेन तदन्तेवासिनाऽपि वा इदं कृतं स्यात्। अस्मिन्नेव व्याख्याने तत्प्रागूभवपञ्चशिखवचांस्यपि संकलितानि। प्राचीनतमाः श्रुतयश्चाप्यत्र संगृहीताः। इदं **समासभाष्यम्** इति कथयितुं शक्यते, संक्षिप्तत्वात् (नास्य व्याख्यानस्य किमपि विशिष्टं नामासीदिति)।

गच्छति काले संप्रदायप्राप्तं तदेव पूर्णमपूर्णं वा व्याख्यानमादाय तत्प्रचारेच्छया (स्वकालोत्पन्नदुष्टमतखण्डनेन सह) केनापि योगिनेदं भाष्यं रचितम् (बौद्धकाले इदं विरचनमभूदिति निश्चीयते)। इदं च विस्तृतमिति कृत्वा (पूर्वव्याख्यानादस्य पृथक्त्वं द्योतयितुं च) अस्य **व्यासभाष्यम्** इति नाम प्रचलितम्। अस्मद्देशे प्राक्तनानां विदुषां प्रायेणैतिहासिकदृष्टयभावाद्

---

१—ब्रह्माण्ड० १।३५, लिङ्ग० १।७ अ०, विष्णु० ३।३ अ०।

२—'विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्........य एवं वाचयेद् विद्वान् स विप्रो व्यास उच्यते' (तत्त्वसन्दर्भ—राधामोहिनीटीका, पृ० १६ धृतं वाक्यम्)।

विद्वत्समाजे 'व्यासकृतोऽयं ग्रन्थ' इति प्रसिद्धिर्जाता। यदि व्यासपरम्परायामस्य भाष्यस्य निर्माणं स्यात्, तर्हि संप्रदायान्तरेष्वप्यस्यानुप्रवेशः स्यात्, प्राचीनाः टीकाश्च भवेयुः, न च तथा दृश्यते।

यतो हि अतिप्राचीनव्याख्यानावलम्बनेनेदं भाष्यं रचितम्, अत एव पतञ्जलेरेकमनुपलब्धमूलं वचनमप्यत्र ( ३।४४ ) उद्धृतं वर्तते, ( तदिदं वाक्यं समासभाष्य आसीदिति निश्चीयते )। काश्चन कालुप्तशाखास्थिताः श्रुतयोऽप्यत्र संगृहीताः ( समासभाष्यकाल एताः श्रुतयः सुप्रचलिता आसन् )। किञ्च 'तथा च व्याख्यातम्' इति व्यासभाष्यगतं वचनम् ( १।४३ ) भाष्यपूर्वभाविनः व्याख्यानस्य गमकम्। तच्च समासभाष्यमेवेत्यस्माकं मतम्। इदमपि प्रतीयते यद् व्यासभाष्यगतानि बहूनि वाक्यानि पतञ्जलिप्रोक्तान्येव, अत एव पूर्वे विद्वांसः पतञ्जलिवचनरूपेण कानिचन भाष्यवचनान्युद्धृतवन्त इति दृश्यते।

व्यासभाष्यरचनाकालः—अस्माभिरनुमीयते यद् बौद्धपिटकरचनातः प्राक् ( बुद्धतः पश्चाच्च ) भाष्यमिदं केनापि योगिप्रवरेण निर्मितम्। तत्काले समासभाष्यं दुरवबोधमभवद् उच्छिन्नप्रायं च। अत एव केनापि योगिना कारुण्यात् समासभाष्योपबृंहणभूतं भाष्यमिदं रचितम्। तत्काले प्राचीनतमबौद्धमतप्रचारो[1] भूयिष्ठ आसीदिति कृत्वा सूत्रतात्पर्यमाश्रित्य कानिचन मोक्षधर्मविरुद्धानि बौद्धमतानि भाष्यकृता निराकृतानि। सोऽयं कालः खोष्टपूर्वा चतुर्थी पञ्चमी वा शताब्दीति (ततोऽपि वा पूर्वा) कथयितुं शक्यते[2]। अत एव प्राचीनपुराणेष्वपि ( विष्णु-लिङ्गादिषु ) योगभाष्यशब्दानुकृतिः दृश्यते। अत्र पुराणान्येवानुकुर्वन्तीति प्रतीयते, पुराणानां संग्रहात्मकत्वात्। समाजे आर्षं ज्ञानं केनापि रूपेण प्रचलितं स्यादिति मन्वाना बुधा दुरूहदर्शनग्रन्थोक्तं ज्ञानमाश्रित्य पुराणानि रचयामासुरिति विज्ञायते।

न्यायभाष्ये ( १।२।६ ) योगभाष्यगतमेकं वाक्यं निर्दिश्य खण्डितम्। तदिदं वाक्यं ३।१३ भाष्ये लभ्यते ( तदेतदित्यादि )। वात्स्यायनः खलु

---

१. खोष्टपूर्ववर्तिकालेऽपि बौद्धदर्शनचिन्ताऽऽसीदिति विज्ञायते। कथावत्थुग्रन्थतो नैकप्रकाराणि बौद्धमतानि आसन्निति निश्चीयते। ग्रन्थोऽयमशोकनृपकालिकः। एतादृशग्रन्थेषु यानि बौद्धमतानि सन्ति, तेषामेव निराकरणं व्यासभाष्ये दृश्यते, न दिङ्नागाद्युपबृंहितानां बौद्धमतानामिति वेदितव्यम्।

२. बुद्धकालविषयेऽपि मतभेदा दृश्यन्ते। चीनदेशीयदूतेन युवान्चुआंगमहोदयेनापि केचन मतभेदा दर्शिताः। अतः खोष्टपूर्वपञ्चमशताब्दीतोऽपि प्राचीनतरो बुद्धजन्मकालो भवितुमर्हतीति।

प्राचीनतमबौद्धदर्शनं निर्दिष्टवान् न्यायभाष्ये । अतः सोऽपि खीष्टपूर्वभव इति निश्चितम् ( द्र० फणिभूषणतर्कवागीशकृता न्यायभाष्यभूमिका, पृ० २६—३६ ) । अतश्च तेन तत्पूर्ववर्तिव्यासभाष्यवचनं समालोचितमित्यत्र न विप्रतिपत्तिः काचित् । न्यायभाष्यगता भाषा योगभाष्यसदृशैव । उभयत्र प्राचीनतमबौद्धवादा एव निराकृताः, न पुनः दिङ्नागाद्युपबृंहिता बौद्धवादा इत्यभ्युपेयम् । यदि च प्रमाणान्तरेणेदं सिद्धं भवेद् यद् उभे भाष्ये समकालिके इति, अथवा न्यायभाष्यकृद् व्यासभाष्यं न दृष्टवानिति तर्हि वार्षगण्यग्रन्थतो न्यायभाष्यकृताऽयं सन्दर्भो गृहीत इत्यभ्युपेयम् । 'तदेतदि'त्यादिवाक्यं ( ३।१३ व्यासभाष्यधृतम् ) वार्षगणीयमिति युक्तिदीपिकातोऽवगम्यते ( पृ० ६७ ) । योगभाष्यत एव वात्स्यायनेनेदं वाक्यं गृहीतमित्येव युक्तः पक्षः ।

व्यासभाष्य ईश्वरकृष्णकृता कापि कारिका नोद्धृता । यद्ययं ग्रन्थो व्यासभाष्यतः प्राग् रचित आसीत् , तर्हि नूनमस्याः श्लोका भाष्ये उद्धृताः स्युरिति । ईश्वरकृष्णः खलु खीष्टजन्मतः पूर्वभव आचार्यः ( द्र० सांख्यदर्शन का इतिहास, पृ० ४४६ )। अत एव योगभाष्यकारस्ततोऽपि प्राचीन इति सिद्ध्यति ।

व्यासभाष्ये न मङ्गलाचरणं दृश्यते । इयं शैली प्राचीनतमा, न्यायभाष्यादिष्वपि इयमेव शैली दृश्यते । दार्शनिकशब्दव्यवहारे श्लथताऽपि क्वचिद् दृश्यते भाष्ये—अनुमेयेति वक्तव्येऽनुमानपदं प्रयुङ्क्ते भाष्यकारः ( १।४३ ), भिन्नक्रमणपदप्रयोगोऽपि दृश्यते ( अत्रैव ), कालीनादिपदानि च प्रयुक्तानि ( २।१३ )। अतो गम्यते अतिप्राचीनमिदं भाष्यमिति ।

नेदं भाष्यं खीष्टजन्मपरभवं भवितुमर्हति, श्रामण्यफलसूत्रे योगभाष्य-( ३।४५ ) गतवचनदर्शनात् । न खलु आर्षग्रन्थकारो बौद्धग्रन्थवचनोद्धरणमिच्छति । श्रामण्यफलतस्तु प्रतीयते यदिदं मतं पूर्वप्रचलितम् । भदन्तधर्मत्रात-भदन्तघोषक-भदन्तवसुमित्रकृतेषु ग्रन्थेष्वपि ३।१३ योगभाष्यगतानि वाक्यानि दृश्यन्ते ( द्र० प्रज्ञापारमिताभूमिका बंगभाषामयी, पृ० ५७ ) । अत्र बौद्धग्रन्थकारा एव अधमर्णा इति ज्ञेयम् , यतो हि बौद्धाचार्याः पूर्वप्रचलितयोगविद्यासंबद्धान् शब्दार्थान् गृहीतवन्तः, न पुनरार्षग्रन्थकारा बौद्धग्रन्थतः किमप्यादातुमिच्छन्तीति ।

तथैव जैनग्रन्थेष्वपि योगभाष्यगतं वचनम् उपलभ्यते । ३।२२ योगभाष्यगत आर्द्रवस्त्र-तृणराशियुक्तो दृष्टान्त आवश्यकनिर्युक्ति-( गाथा ६५६ ) ग्रन्थे दृश्यते । तत्त्वार्थाधिगमटीकायामपि ( २।५२ ) ३।२२ योग-

भाष्यगतः सन्दर्भ उद्धृतो दृश्यते । नेदं चिन्तनीयं यद् योगभाष्यकारो जैनग्रन्थम् अनुचकारेति । तत्त्वार्थाधिगमटीका ५–६ खीष्टशतकीयेति ऐतिहासिकाः, अतो भाष्यमिदमेतत्कालादपि प्राचीनमिति वक्तव्यमेव ।

योगभाष्योद्धृतानि मतानि, संप्रदायाश्च—ग्रन्थेऽस्मिन् बहूनां दार्शनिक-संप्रदायानां मतान्युद्धृतानि । व्याख्याकृद्भिर्यथायथं तेषां विवरणं प्रदत्तम् । तथाहि—

( १ ) वैनाशिकबौद्धमतम्[१]—४।१४ भाष्ये 'नास्त्यर्थो विज्ञानविसहचर ····इत्यादि यद्वाक्यं, तद् वैनाशिकदृष्टि ( विज्ञानवादयुक्तां ) प्रतिपादयति । तथैव ४।१६ भाष्यगतं वाक्यम् ( स्यादाशङ्का चित्तमेव ) अपि वैनाशिक-मतपरमिति भिक्षुः । ४।२१ भाष्येऽपि वैनाशिकमतमस्ति ( स्यान्मतिः···· ) । १।४३ भाष्ये यदुक्तं—यस्य पुनरवस्तुकः···इति, तद्वैनाशिकमतमिति भिक्षुः ।

( २ ) बाह्यार्थवादिवैनाशिकमतम्—४।२३ भाष्ये मतमिदमस्ति ( तद-नेन चित्तसारूप्येण भ्रान्ताः केचित् तदेव चेतनमाहुः ) । बाह्यार्थवादिनां मतमिदमिति भिक्षुः। अत्राह विवरणकारः—"एतत्तु चित्तसारूप्यं वैशेषिकाणां प्रमोहकारणम्" इति ।

( ३ ) शुद्धसन्तानवादिमतम्—४।२१ भाष्ये 'केचित् सत्त्वमात्रमपि परिकल्प्य' इत्यादि यदुक्तं तत् शुद्धसन्तानवादिमतमिति हरिहरानन्दचरणः । वैनाशिकविशेषाणां मतमिदमिति विवरणकारः ।

( ४ ) शून्यवादिमतम्—४।२१ भाष्ये यदुक्तं ( तथा स्कन्धानां महा-निर्वेदाय·········अपह्नुवते ) तत् शून्यवादं लक्षयतीति स्पष्टमेव ।

( ५ ) विज्ञानवादिमतम्—४।१६ भाष्ये 'केचिदाहुः ज्ञानसहभूरेवार्थः' इत्यादि वचनं खल्वेतद्-दर्शनपरम्, बाह्यार्थमुपगच्छतामिदं मतमिति विवरण-कारः । ४।२३ भाष्ये 'अपरे चित्तमात्रमेवेदम्–' इत्यादिसन्दर्भोऽपि विज्ञान-वादमेव लक्षयतीति भिक्षुः, इदं बौद्धमतमिति विवरणकारः । ४।१४ भाष्येऽपि ( नास्त्यर्थो विज्ञानविसहचरः·····आहुः ) विज्ञानवादमेव लक्षितम् ।

( ६ ) क्षणिकवादः—४।२० भाष्ये नामोल्लेखपूर्वकं क्षणिकवादोत्थापनं कृतम् ( क्षणिकवादिनो यद् भवनम् इत्यादि ) । तथैव १।३२ भाष्ये विक्षिप्त-चित्त-समाधान-विवरण-प्रसङ्गे क्षणिकवादस्य खण्डनं विहितम् । अत्रोक्तं मतं वैनाशिकदृष्ट्येति मन्तव्यम् ।

---

१. विधुशेखरभट्टाचार्यकृतागमशास्त्रे, आचार्य नरेन्द्रदेवकृतबौद्धधर्मदर्शनग्रन्थे ( हिन्दीभाषामये ), T. R. V. Murti कृत Central Philosohhy of Buddhism ग्रन्थे चैतेषां वादानां स्वरूपं विवृतम् ।

( ७ ) एकान्तवादः—३।१३ भाष्ये 'अपर आह' इत्युक्त्वा परिणामसंबद्धं किमपि मतम् उपदर्शितम् । तच्च एकान्तवादिनां बौद्धानामेव मतमिति वाचस्पतिमिश्रः । असत्कार्यसमारम्भाभिमानीत्थं कथयतीति विवरणकारः । आहात्र भिक्षुः—"स्वरूपान्यथात्ववादिबौद्धैः धर्मिपरिणामे प्रोक्तं दूषणं निराकर्तुमुत्थापयति—अपर आहे"ति ।

( ८ ) बौद्धमतान्तरम्—३।१३ भाष्य उक्तम् 'अवस्थापरिणामे कौटस्थ्य-दोषप्रसङ्गः कैश्चिदुक्त' इति । अयं बौद्धसम्प्रदायगतो मतविशेष इति विज्ञान-भिक्षुः ।

( ९-१० ) उच्छेदवाद-शाश्वतवादौ—( २।१५ ) भाष्ये शब्दत इमौ वादौ उदाहृतौ ।

( ११ ) निर्ग्रन्थमतम्—४।१० भाष्य उक्तम्—"घटप्रासादप्रदीपकल्पं संकोचविकाशि चित्तं शरीरपरिमाणाकारम् इत्यपरे प्रतिपन्नाः" । इदं निर्ग्रन्थ-( जैन ) मतमिति भास्वतीकारः । सांख्यीयमतविशेषोऽयमिति विज्ञानभिक्षुः । नेदं भिक्षुमतं विचारसहमिति प्रतिभाति । सांख्यदृष्ट्या भवेन्नाम चित्तं संकोच-विकाशि, तथापि न तत् शरीरपरिमाणाकारम् इष्यते केनापि सांख्याचार्येण ।

( १२ ) वैशेषिकमतम्—३।५३ भाष्ये 'अपरे तु वर्णयन्ति' इत्यादिकं वाक्यं वैशेषिकमतं लक्षयतीति वाचस्पतिर्भिक्षुश्च ।

**भाष्यादिमश्लोकस्य प्रक्षिप्तता**—भाष्येऽस्मिन् य आदिमः श्लोकः ( यस्त्यक्त्वेत्यादि ) विद्यते, स प्रक्षिप्त एव । नायं श्लोको वाचस्पतिना व्याख्यातो, नैवास्य प्रतीकोऽपि धृतः । विवरणटीकायामपि नायं श्लोकः स्मृतः। इदं प्रतीयते यदयं श्लोको वाचस्पतेरनन्तरं ग्रन्थादौ केनचित् स्थापितो मङ्गलाचरणसिद्ध्यर्थं । शेषनागपतञ्जलिरेवास्य योगसूत्रस्य प्रणेतेति काल्पनिका प्रसिद्धिर्यदा प्ररूढा जाता, तदैवायं श्लोक इहोपस्थापितः केनापि योगसूत्र-भक्तेन । तदनन्तरञ्च विज्ञानभिक्षुणा श्लोकोऽयं व्याख्यातः ।

श्लोकोऽयं महाभाष्यटीकायां शंकरविरचितायां मङ्गलश्लोकरूपेणास्ते ( द्र० पृ० १२० पुरुषोत्तमदेवकृतपरिभाषावृत्तिः, वरेन्द्र-रिसर्च-मिउजियम प्रकाशिता ) । टीकेयं पुरुषोत्तमदेवकृतमहाभाष्यवृत्तेः ( प्राणपणा ) व्याख्या। शंकरोऽयं नवद्वीपनिवासीति ( द्र० I. H. Q. Sept. १९४३; सं० व्या० इ० भाग १, पृ० २८९ ) ।

**योगभाष्यगतानि शास्त्रान्तरवचांसि**—योगभाष्ये यानि वचांस्युद्धृतानि, तद्विषय इदं विज्ञेयम्—पञ्चशिखस्य वचनानि भाष्यकृता पञ्चशिखनाम्ना सह नोद्धृतानि; वाचस्पतिर्भिक्षुर्वा कथयति यदेतानि वाक्यानि पञ्चशिखप्रोक्ता-

नीति। वार्षगण्यस्य यद् वचनं ३।५३ भाष्य उद्धृतं, तत्रेयं चिन्ता जायते कथमत्र प्रथमान्तः वार्षगण्यशब्दः पठितो यतो वाक्यारम्भे 'उक्तम्' इति पदमस्ति। सेयं समस्या उदयवीरशास्त्रिणा विचारिता ( सां० द० इ० पृ० ६०-१०१ )। ४।१३ भाष्यधृतो 'गुणानामि'त्यादिश्लोको वार्षगण्यकृत इति वाचस्पतिराह (भामती २।१।३)। इदं षष्टितन्त्रवचनमिति तत्त्ववैशारद्यामुक्तम्।

भाष्ये आकरनामागृहीत्वा बहूनि गद्यपद्यमयानि वाक्यान्युद्धृतानि ( १।२८; १।४७; २।१३; २।२३ इत्यादिषु स्थलेषु )। ईषत्पाठभेदेन सह अविकलरूपेण वा तानि वचांसि विष्णुपुराण-बृहदारण्यक तैत्तिरीयारण्यकादिषु दृश्यन्ते ( यथास्थानमिदं निर्दिष्टम् ), परन्तु नेदं मन्तव्यं यद् भाष्यकारो निर्दिष्टाकरत एव वाक्यानि संकलितवान् इति, यतो हि ग्रन्थान्तरेष्वपि तानि वचांसि अविकलरूपेण ईषत्-पाठभेदेन सह वा दृश्यन्ते। तथा हि—

१।२८ भाष्यधृतः स्वाध्यायादिति श्लोको यथा विष्णु-पुराणेऽस्ति, तथैव सौभाग्यलक्ष्म्युपनिषद्यपि। १।४७ भाष्यधृतः प्रज्ञाप्रासादेति श्लोकोऽहिर्बुध्न्य-संहितायामपि ( १५।७१ ) दृश्यते। धम्मपदे ( २।८ ), शान्तिपर्वणि ( १७।२० ) अन्यत्रापि पाठवैलक्षण्येन सहायं दृश्यते। २।१५, ३।१३ भाष्ययोर्यद् 'रूपातिशया.......' वाक्यं दृश्यते, तच्च पञ्चशिखोक्तमिति व्याख्याकाराः, इदं वार्षगण्यवचनमित्यपि कथयितुं शक्यते ( द्र० युक्तिदीपिका १३ कारिका )। मन्ये—पञ्चशिखवाक्यमाश्रित्य वार्षगण्येन स्वग्रन्थः प्रोक्तः, अतः पञ्चशिख-वाक्यान्यपि क्वचिद् वार्षगण्यवाक्यरूपेण संप्रदाये प्रसिद्धानि। 'यच्च कामसुखमि'ति श्लोको यथा महाभारते, तथा वाय्वादिपुराणेष्वपि दृश्यते।

आकरनिर्देश-प्रसंगे क्वचिद् मिश्र-भिक्षुमतयोरैक्यं न दृश्यते। तथाहि—२।५२ भाष्यधृतं महामोहेत्यादि वाक्यमागमिनामिति मिश्रः, पूर्वाचार्याणामिति भिक्षुः। २।५ भाष्यधृतं स्थानादित्यादिवाक्यं श्रुतिरिति भिक्षुः, वैयासिकी गाथेति मिश्रः, एवमन्यान्यपि कानिचन वाक्यानि भिक्षुमतेनैव पाञ्चशिखीयानि, न मिश्रमतेनेति विज्ञेयम्।

भाष्य-(४।३१) गतोऽन्धो मणिमित्यादिश्लोक ईषत्पाठभेदेन सह तैत्तिरीयारण्यक-( १।११।५ ) ग्रन्थे उपलभ्यते। इदं षष्टितन्त्रवाक्यमित्यपरे, यथाह वृषभदेवः-"इदं फेन इति। षष्टितन्त्रग्रन्थश्चायं यावदभ्यपूजयदिति" ( वाक्य-प. १।८ टीका )।

इदं प्रतीयते यद् २।२८ भाष्यधृत उत्पत्त्यादिश्लोकः, ३।१५ भाष्यधृतो निरोधादिश्लोकश्च योगविचारपरायणात् कस्माच्चिद् ग्रन्थाद् उद्धृत इति। हिरण्यगर्भयोगशास्त्र इमौ श्लोकावास्तामिति कथयितुं शक्यते।

काललुप्तशाखास्थिताः श्रुतयोऽपि आहृताः ( द्र० २।१३, २।२१, ४।२२ भाष्यम् )। ४।२२ भाष्ये यद् वाक्यमस्ति तत्र ब्रह्मपदं प्रयुक्तमित्यवगन्तव्यम्। अनेन सांख्ययोगे ब्रह्मचिन्ता नास्ति–इत्याधुनिकगवेषकाणां कथनमयुक्तम्।आसुरिः किल ऋषीन् ब्रह्मतत्त्वम् उपदिदेशेति शान्तिपर्वणि ( २१८। १०–१४ ) दृश्यते ।

३।१४ इत्यत्र 'जलभूम्योः परिणामिकम्' इत्यादि वाक्यमस्ति उद्धृतम् । कुतः खलु वचनमिदं गृहीतमिति जायते विचारणा । एतादृशमेकं वाक्यम् सांख्यकारिकामाठरवृत्तौ ( १५ का० ) विद्यते[1] । अत्रेदमपि विज्ञेयं यत् पूर्वाचार्या न सर्वत्र वाक्योद्धरणस्थलेषु 'तथा चोक्तम्' 'तदुक्तम्' इत्येतादृशानि वाक्यानि कथयन्ति[2], अतः तदुच्चारितं वाक्यं स्वकीयं वा परकीयं वेति संशयो जागर्ति।दृश्यते खलु २।१ भाष्ये 'नातपस्विनः.........' इत्यादिः सन्दर्भः।स च माठरवृत्तौ ( २३ का० ) पठ्यते, न पुनर्योगभाष्यकारो वाक्यमिदमुद्धरणरूपेण पपाठ । इदमपि दृश्यते यत् ४।२२ भाष्ये अररिणामीत्यादि वाक्यं योगभाष्ये मूलरूपेण वर्तते, तदेव च वाक्यमुद्धरणरूपेण २।२० भाष्ये पठ्यते ( तथा चोक्तमित्याह भाष्यकारः ) । अतो वाक्यसाम्यबलेन उद्धरणबलेन च ग्रन्थकालपौर्वापर्यनिर्णयो दुष्कर इव प्रतिभाति ।

अपरमपि दृश्यताम् । 'अहिंसा नाम सर्वभूतेषु अनभिद्रोह' इति हारीतेनोक्तम् ( कृत्यकल्पतरु-मोक्षकाण्डम्, पृ० ५३ धृतम् )।तदिदं वाक्यं मूलरूपेण योगभाष्ये वर्तते ( २।१० )। उक्तं च भाष्ये—"नानुपहत्य भूतान्युपभोगः संभवतीति........" ( २।१५ ) । इदं स्वकीयं परकीयं वा वाक्यमिति न निर्णेतुं शक्यते, जयमङ्गलायां पुनः 'सर्वं शक्यं किन्तु अनुपहत्य भूतानि न भोगः संभवतीति वाक्यमस्ति । वाक्यमिदं पूर्वतनाचार्योक्तिरिति प्रतिभाति ।

अपरमपि । चलं च गुणवृत्तमिति योगभाष्ये दृश्यते ( २।१५, ३।१३, ४।१५)।अत्र वाक्यमिदं भाष्यकारस्य स्वकीयं वा परकीयं वेति न निश्चीयते—

---

१. नेदं मन्तव्यं यद् भाष्यकारो माठरवृत्तितो वाक्यमिदमुद्धृतवानिति । इदं पूर्वाचार्यवचनमिति भिक्षुः, मन्ये इदं पाञ्चशिखं वाक्यमिति।

२. वाक्यपदीये संग्रहग्रन्थतो बहूनि वचनानि संकलितानि, न च पुनर्हरिराह यदिमानि वचांस्यन्यत उद्धृतानीति । एतानि वचनानि मूलश्लोकरूपेणैव पठितानि । भट्टोजिकृते श्लोकमये वैयाकरणभूषणग्रन्थेऽपि वाक्यपदीयादिभ्यः श्लोका आहृताः, न च पुनरुद्धरणसंकेतः कृतो दीक्षितेन, मूलश्लोकरूपेण ते श्लोकाः स्थापिताः । ग्रन्थान्तरेष्वपीयं शैली दृश्यते, अतो न वचनसाम्यमात्रेणैव निर्णयः कर्तव्य इति ।

परकीयमेवेति 'इति' पदप्रयोगाद् वा गम्यते। (२।२।६)। शारीरके शंकरस्तु 'चलं गुणवृत्तमिति चास्त्यभ्युपगम' इत्याह। पूर्वेषां सांख्याचार्याणां ग्रन्थे वाक्यमिदमासीदिति प्रतीयते। न च मन्तव्यं यत् शंकरो योगभाष्यतो वाक्यमिदं उद्धरति। न खलु शंकरेण योगभाष्यं दृष्टमित्यन्यत्र प्रतिपादितम्।

अपरमपि। सेयं पञ्चपर्वा भवत्यविद्येत्येवाह भाष्यकारः (१।८)। इदं च वार्षगण्यमतमिति मिश्रः, यथाह—"पञ्चपर्वा अविद्या इत्याह भगवान् वार्षगण्यः" (तत्त्वकौ० ४७ कारिका)। एवमन्येष्वपि स्थलेषु दृश्यते, अतो यावन्न ग्रन्थकार आकरग्रन्थनाम गृह्णाति, तावन्नाकरनामनिर्णयो विधेयः। संभावनामात्रं प्रदर्शनीयमिति। पौराणिकवचनस्थले चेयं युक्तिः सर्वत्रैव स्वीकरणीया।

योगभाष्योपजीव्यभूतानि शास्त्राणि—यतो हि भाष्ये जैगीषव्यादीनां नामानि प्रमाणत्वेनाभ्युपगतानि, अतस्तत्कृतग्रन्था योगभाष्योपजीव्यभूता आसन्निति निश्चप्रचम्। हारीतदेवलादीनां नामानि यद्यपि न भाष्ये स्मृतानि, तथापि तत्कृतशास्त्राण्यपि भाष्यकारोऽशिश्रियदित्यपि स्वीकरणीयमेव[1]। पञ्चशिखः खलु प्रधान उपजीव्यभूत आचार्यो भाष्यकारस्येति प्रतिभाति। यद्यपि विन्ध्यवासिनाम भाष्ये नास्ति, तथापि इदं प्रतीयते यद् विन्ध्यवास्यपि भाष्येऽनुसृतः[2] (यदीदं प्रमितं स्याद् यद् विन्ध्यवासी भाष्यपूर्वभव आचार्य इति)। वार्षगण्योऽपि स्मृतो भाष्ये; तन्मतानि च भाष्ये बहुत्र स्वीकृतानि[3], यद्यपि तन्नाम न सर्वत्र स्मृतम्। योगशास्त्रे भगवतो वार्षगण्यस्य कश्चिद् ग्रन्थ आसीदिति वाचस्पतिराह (भामती २।१।३)।

सन्ति भाष्ये सन्दर्भा यतः प्रतीयते यद् भाष्यकारः स्वपूर्वग्रन्थाश्रयेण स्वग्रन्थं लिलेख। तथाहि–'त्रीणि बन्धनानि छित्वा' इत्याह भाष्यकारः (१।२४)। कानि पुनस्त्रीणीति ? अयमेकः पूर्वाचार्यसिद्धान्त इति ज्ञेयम् (द्र० योगवा० २।१६;), स एवात्र भाष्यकारस्य लक्ष्यभूत इति। अपरमपि—भाष्यकारो वशीकारसंज्ञामाह (१।१५)। एतेन प्रतीयते यद् यतमानादिसंज्ञा अपि स ज्ञातवानिति। अतो यतमानादिवैराग्यभेदप्रतिपादकं शास्त्रमप्यासीदिति निश्चप्रचम्। संवेगादिशब्दानामर्था भाष्ये न प्रदर्शिताः, अतो ज्ञायते योग-

---

१. द्र० सा० द० इ० पृ० ४६६–५०६; अत्र यानि देवल-हारीत वचांस्युद्धृतानि, तेषामनुकृतिर्योगभाष्ये क्वचिद् दृश्यते।

२. द्र० सा० द० इ० पृ० ५२६–५३२।

३. द्र० सा० द० इ० पृ० ५०७–५१२।

विद्यासंप्रदाये एतेषां शब्दानामर्थाः सुप्रसिद्धा आसन्निति । १।८ भाष्ये तमो-मोहादिसंज्ञोल्लेखोऽस्ति, सोऽपि योगशास्त्रान्तरसत्तां ज्ञापयति । २।२३ भाष्ये 'इत्येते शास्त्रगता विकल्पाः' इति यद् वाक्यमस्ति, तदपि योगशास्त्रान्तरसत्ता-ज्ञापकमिति निर्विवादम् । एवमन्यत्रापि ज्ञेयम् ।

योगभाष्योद्धरणकर्तारः—यथा योगसूत्रं बहुभिराचार्यैः स्मृतं तथा योगभाष्यमपि ।[1] आह जयन्तभट्टो न्यायमञ्जर्याम्—"अन्यत्राप्युक्तम्—भोगाभ्यासमनु विवर्धन्ते रागाः, कौशलानि चेन्द्रियाणाम्" इति ( पृ० ८७, मोक्षाभ्यासमिति मुद्रितः पाठः ) । तदिदं वाक्यं २।१५ भाष्ये दृश्यते ।

इदं प्रतीयते यन्न्यायभाष्येऽपि योगभाष्यमुद्धृतम् । तथाहि वात्स्यायनो वक्ति—"परिणामश्च अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः" इति ( ३।२।१५ ) । योगभाष्ये पुनः पठ्यते—"अथ कोऽयं परिणामः ? अवस्थितस्य····धर्मान्तरोत्पत्तिः परिणाम इति" ( ३।१५ ) । एतादृशं शब्दसाम्यं न सहसा संभवति, अतः उत्तमर्णो व्यास इत्यभ्युपेमम् । वाक्यपदीयगतकाल-समुद्देश-हेलाराजटीकायाम् ( ६१ श्लो० ) 'तदुक्तं पातञ्जले धर्मी त्र्यध्वेत्यादि यद् वाक्यमुक्तं तद् ३।१३ योगभाष्यगतम् । ५५ श्लोक व्याख्यायामपि तथैव ।

जैनादिविद्वत्कृतग्रन्थेष्वपि योगभाष्योद्धरणं वर्तत इति प्रागुक्तम् । सर्वदर्शनसंग्रहान्तर्गतपातञ्जलदर्शनप्रकरणे भाष्यमिदमुद्धृतम् ( पृ० ३४७ ) ।

व्यासभाष्यपाठसमीक्षा—भाष्यमिदं शुद्धपाठभूयिष्ठमेवावलोक्यते । क्वचिदेव पाठ-विषये द्वैधमुपजायते । केचिद् विशिष्टाः पाठभेदा विचार्यन्ते—

१—१।७ भाष्ये विन्ध्यश्चाप्राप्तेरगतिरिति क्वचित् पठ्यते, तत्त्ववैशारद्यां यथा व्याख्यातं तथा मुद्रितः पाठ एव युक्तः । भिक्षुस्तु अप्राप्तेरिति पाठस्या-युक्ततां दर्शितवान् ।

२—१।६ इत्यत्र 'प्रतिषिद्धवस्तुधर्म' इति पाठोऽपि दृश्यते । पाणिनीय-प्रभावानुसारेण कैश्चिद् अस्मत्सम्मते प्राचीनतरपाठस्थाने परिवर्तितः पाठः स्थापित इति प्रतिभाति ।

---

१. क्वचित् योगभाष्यवचांसि पतञ्जलिनाम्ना उद्धृतानि दृश्यन्ते । यथा सन्मति-तर्कग्रन्थे ( पृ० १५३ ) २।१५ भाष्यगतं भोगाभ्यासमित्यादिवाक्यं पतञ्जलिनाम्नोद्-धृतम् । तथैव षड्दर्शनसमुच्चयस्य गुणरत्नकृतटीकायां (पृ० १०१) २।२० योगभाष्य-गतं शुद्धोऽपि पुरुषः प्रत्ययमित्यादि वाक्यं पतञ्जलिवाक्यरूपेण कथितम् । ४।१० योगभाष्यगतमेकं वाक्यं पतञ्जलिवाक्यरूपेण न्यायवार्तिकतात्पर्यटीकायाम् ( पृ. ६ ) पठितम् ।

३—१।४४ भाष्ये 'महद्वस्तु' स्थले क्वचिद् 'महावस्तु'-शब्दो दृश्यते । पूर्वापरसाहचर्यादत्र 'महद्वस्तु' इत्येव साधुः पाठ इति गम्यते, यतो हि महद्-रूपं वस्त्वत्राभिप्रेतं, न पुनर्महत्त्वयुक्तं वस्तु ।

४—२।३ भाष्ये स्यन्दमानस्थले स्पन्दमान इति पठ्यते क्वचित्, ग्रन्थ-स्वारस्यात् स्यन्दमान-पाठ एव स्थापितः ।

५—२।२७ भाष्ये शिखरतटेति पठ्यते शिखरकूटस्थले । अत्र शिखरकूट एव साधीयान् पाठः ।

६—३।१५ भाष्य-श्लोके धर्मस्थले कर्मेति पठ्यते क्वचित् । तन्न सम्यक्; न खलु कर्म दर्शनवर्जितो धर्मो भवितुमर्हति, कर्मसत्ता प्रत्यक्षेणैव गम्यते, धर्मः पुनरनुमानेन प्रापितवस्तुसद्भाव इति ।

७—३।२६ भाष्ये द्वीपनामसु गोमेधेति पाठो मुद्रितः । स च मुद्रण-प्रमादजः, सम्यक् पाठस्तु 'गोमेद' इति । केषुचिच्च संस्करणेषु गोमेधः, मगधो वा पाठो दृश्यते । अत्र मगधपाठः सर्वथा असमीचीनः, पुराणादिषु द्वीपनामसु मगधनामादर्शनात् । मत्स्यपुराणे ( १२३।१, १२३।१२ ) गोमेद-शब्दो दृश्यते द्वीपनामासु । सभापर्व-ज्ञानदीपिकाटीकायाम् ( पृ० ११ ) सप्त-द्वीपनामगणनात्मकः श्लोक उपलभ्यते, तत्र गोमेदेति नाम पठ्यते, अतः गोमेद-पाठः साधुरिति । गोमेधेति नाम पुराणादिषु न दृश्यते इति ज्ञेयम् ।

८—३।२६ द्वीपनामसु क्वचिद् जम्बुरिति ह्रस्वोकारान्तः पठ्यते । न स सम्यक्, 'जम्बू'-इत्यूकारान्तः पाठ एव साधुः, पुराणकोशतस्तथैव प्रतीतेः । मुद्रितेषु पुराणेष्वपि ह्रस्वोकारान्तः पाठो दृश्यते, सोऽनवधानमूलक इति प्रतिभाति ।

९—३।४० भाष्ये 'ज्वलयति' इति पाठोऽपि दृश्यते, ग्रन्थस्वारस्याच्चु ज्वलतीत्येव साधुः पाठः ।

१०–३।४१ 'तथामूर्तस्ये' ति पठ्यते । अत्र अमूर्तस्य मूर्तस्येति वा छेदो भवितुमर्हति । अमूर्तस्येति पाठः स्थापितः, यतो ह्यनावरणपदमत्रैव प्रयुक्तम् ।

११—४।६५–क्वचित् कोशे 'कथं स्विदिदम्' इति न पठ्यते । पूर्व-भाष्यसाहचर्यात् ( २।३९ ), बहुसम्मतिदर्शनाच्च स पाठ इह स्थापितः ।

१२–४।२६ भाष्ये 'विवेकजज्ञाननिम्न' मिति पाठो दृश्यते । सूत्रे पुन-र्विवेकनिम्नमिति । पातञ्जलदृशा विवेकजज्ञानं विवेकज्ञानात् पृथक्, न खलु विवेकजज्ञानेन कैवल्यं भवतीति । ४।२७ भाष्येऽपि विवेक-निम्नस्येत्येव पाठो दृश्यते । अतो मन्यामहे यदत्र विवेकज्ञाननिम्नमित्येव भाष्यपाठः साधुरिति । भाष्यविवरणे तु विवेकज्ञानेति पाठ एव स्वीकृतः । यदि पुनर्विवेकजज्ञानेति

पाठ एव प्राचीनतमः पाठ इति प्राचीनकोशेभ्यः सिध्येत्, तर्हि एवं मन्तव्यं यदत्र विवेकजशब्दो यौगिकः—विवेकाज् जात इत्यर्थकः, न पुन र्विवेकजेति पारिभाषिकः शब्दः ( द्र० ३।३२, ३।५४ ) ।

क्वचिच्च भाष्यपाठे जायते सन्देहः—वाक्यमिदं उद्धरणरूपेण प्रयुक्तं स्ववाक्यरूपेणैवेति । यथा—२।१६ इत्यत्र—तथा चोक्तं पुरस्ताद् नेत्यादि वाक्यं पठ्यते। कश्चिद् मनुते यद् 'न विशेषेभ्य' इत्यादिकं वाक्यमुद्धरणरूपेणात्र पठितमिति । अस्माकं मते 'तथा चोक्त' पुरस्ताद्' इति वाक्यं पूर्वान्वयि, न विशेषेभ्य इत्यादि तु भाष्यकारस्योक्तिः ।

तथैव २।१५ भाष्ये 'तथा चोक्तं नानुपहत्ये'त्यादि वाक्यं दृश्यते । अत्र नानुपहत्येत्यादिवाक्यम् आचार्यान्तरवाक्यं भाष्यकृतोद्धृतमिति केचित् । अस्माभिस्तु तन्न मन्यते, तथा चोक्तमिति पूर्वान्वयीति आस्माकीना दृष्टिः ।

व्यासभाष्यटीकाकाराः—अथात्र योगभाष्यटीकानां विवरणं प्रस्तूयते । टीकाकारेषु वाचस्पतिरेव प्राचीनतमः । वाचस्पतिर्न व्याख्यान्तरं सस्मार, यद्यपि तेन भाष्यपाठान्तराणि बहुत्र निर्दिष्टानि इति विज्ञेयम् ।

तत्त्ववैशारदीकारो वाचस्पतिमिश्रः—महाभागो वाचस्पतिः सर्वदर्शन-व्याख्याकृत्। स च यद्यपि सर्वतन्त्रस्वतन्त्रः, तथा प भगवति शिवे तस्य द्रढीयसी आस्थासीदिति विज्ञायते । भामत्यारम्भे, न्यायकणिकारम्भे च भवं प्रति, तात्पर्यटीकारम्भे पिनाकिनं प्रति, तत्त्ववैशारद्यारम्भे वृषकेतुं प्रति तेन नमस्कारो विहित इति दृश्यते । विष्णु-गणपति-तिलकस्वामिनः प्रत्यपि तेन प्रणतिर्विहिता । ( द्र० म० म० गोपीनाथकविराजकृतो वाचस्पतिविषयको लेखः, S. B. S. समाख्ये पत्रे प्रकाशितः ) ।

नृगराजकाले[१] वाचस्पतिः प्रादुर्बभूव—इति भामतीग्रन्थतो विज्ञायते ( द्र० अन्त्यमङ्गलाचरणश्लोकौ ) । २।१।३३ ब्रह्मसूत्रभामत्यामपि तेन नृगनरेन्द्रस्य विशिष्टा कृतिरुपनिर्दिष्टा । नृग इति राज्ञो नाम, स च इतिहासप्रसिद्ध इति व्याख्याग्रन्थतो विज्ञायते ( द्र० कल्पतरुपरिमल-टीके ) । कोऽयं नृग इति प्रश्नोऽयं न निर्णीतः । महीपालनामा कश्चिद् राजा 'महीप'शब्देन लक्षितः ( तस्मिन् महीपे महनीयकीर्तौ—अन्त्यमङ्गलश्लोको द्र० ) इति केचित् । विक्रमशिलामहाविहारसंस्थापको मगधगौडदेशाधिपो धर्मपाल एव नृग इत्यन्ये ।

---

१. न्यायवार्त्तिकभूमिकायां ( पृ० १४३-१५१ ) विन्ध्येश्वरीप्रसाद उक्तवान् यद् दशमशताब्द्यां चौहानवंशे नृगनामको राजाऽभीत्, तत्काले वाचस्पतिर्बभूवेति । नैतिहासिका मतमिदं पुष्णन्ति ( वेदान्तदर्शनेर इतिहास, भाग १, पृ०३२४ )

प्रज्ञानन्दस्वामी नृगादिविषये बहु विचारितवान् ( द्र० तत्कृतो वेदान्तदर्शनेर इतिहासनामा वंगभाषामयो ग्रन्थः, भाग १, पृ० ३२१–३२५ ) ।

वाचस्पतिः स्वयमेव स्वकालं निरदिक्षत्—'वस्वङ्कवसुवत्सर' इति (न्याय-सूची-निबन्धोऽसौ अकारि सुधियां मुदे । श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु-वत्सरे—लक्षणावलीग्रन्थान्ते ) । अत्र ८६८ संख्या ग्राह्या । सा च विक्रमाब्दं लक्षयतीत्यैतिहासिकाः, अतः ८४१ ईसवीय-वत्सर आयाति । हरप्रसाद-शास्त्री, दिनेशचन्द्र-भट्टाचार्यश्च शककालपक्षमेव निरदिक्षताम् । तदिदं मतं तर्कासह-मिति विस्तरेण उदयवीरशास्त्री प्रतिपादयामास । शास्त्रिपक्ष एवास्माकमिष्टः ( द्र० सा० द० ई० पृ० ३४६—३६० ) ।

वाचस्पतिर्गृहाश्रमी, तस्य पत्न्या नाम 'भामती'ति । पत्नी-नाम-प्रसिद्ध्यर्थं शारीरकभाष्यटीकायाः स्वकृतायाः नामापि तेन कृतम्–भामतीति । अर्वाचीनैः टीकाकारैरपि स भामती-पतिरितिशब्देनाभिहितः ।

वाचस्पति-प्रामाण्यम्—लघुमञ्जूषायां तत्त्ववैशारदी उद्धृता ( पृ०४०-४१ सभापतिसंस्क० ) । योगसूत्रटीकाकारा अपि वाचस्पतिमतं प्रमाणत्वेन निर्दि-शन्ति, क्वचिच्च ते नामोल्लेखमकृत्वाऽपि मिश्रमतमुद्धरन्तीति दृश्यते । भाष्य-विवरणेऽपि वाचस्पतिमत 'मन्येषां व्याख्यानमि'त्युक्त्वोद्धृतम् ( १।२४ ) । वाचस्पतेर्नाम नोक्त्वा विज्ञानभिक्षुर्बहुत्र वाचस्पतिमतं खण्डयति ( १।१७, १।२१ ), यद्यपि विचारपाटवदृष्ट्या प्रायेण मिश्रमतान्येव समीचीनानि प्रतीयन्ते । 'तात्पर्यपरिशुद्धि'-ग्रन्थारम्भ उदयनाचार्यो वाचस्पतिमस्तावीदित्यहो मिश्रस्य प्रभावः! सर्वदर्शनसङ्ग्रहान्तर्गत-पातञ्जलदर्शनप्रकरणे मिश्रव्याख्यान-मुद्धृतम्[1] ।

वाचस्पतिकृता ग्रन्थाः[2]—१—तत्त्ववैशारदी–इयं योगभाष्यस्य टीका। २—तत्त्वकौमुदी—इयं सांख्यकारिकाग्रन्थस्य टीका । केचित् कथयन्ति यद् इयं व्याख्या न वाचस्पतिकृतेति । दृश्यते खलु प्राणस्वरूपविषये तत्त्व-

---

१. एवं सत्यपि तत्त्ववैशारद्याद्यमङ्गलश्लोकतः प्रतीयते यन्मिश्रेण पातञ्जल-संमतमीश्वरतत्त्वं नावबुद्धम् । नात्रेश्वरो जगदुत्पत्तिहेतुरिति ।

२. न्यायसूत्रोद्धारकृद् वाचस्पतिः खल्वन्यः कश्चित् । धर्मशास्त्रीयग्रन्थकारे-ष्वपि वाचस्पति-नाम श्रूयते, स च १५ शताब्दीमध्यकालीयः । ( द्र० काणेकृत H. Dh. S. Vol. I. Sec. 98 ) ।

वैशारदी-तत्त्वकौमुदीग्रन्थयोर्मतभेदः। ग्रन्थान्तरे विषयोऽयं विचारयिष्यते। श्रीपञ्चाननतर्करत्नेन अस्या अपि कौमुदीनाम्नी व्याख्या प्रणीता, सा च वङ्गाक्षरेषु प्रकाशिता। तत्त्वविभाकरनाम्नी व्याख्याऽप्यस्ति। ३—न्यायसूचीनिबन्धः—ग्रन्थेऽस्मिन् न्यायसूत्रपाठः सूत्रसंख्या चैतद्द्वयं सम्यक् संकलितमाचार्येण। ४—न्यायवार्त्तिकतात्पर्यटीका—इयं न्यायवार्त्तिकस्य टीका। ५—न्यायकणिका—इयं मण्डनमिश्रकृत-'विधिविवेक'-ग्रन्थस्य टीका। तत्त्ववैशारद्यां ग्रन्थोऽयमुल्लिखितः (४।१४)। ६—तत्त्वबिन्दुः—शब्दतत्त्वं शाब्दबोधं चाधिकृत्य लघुरयं ग्रन्थः प्रणीतः। ७—तत्त्वसमीक्षा—इयं 'ब्रह्मसिद्धि'ग्रन्थस्य टीका। अस्या अपरं नाम ब्रह्मतत्त्वसमीक्षेति ज्ञायते। नायं ग्रन्थ उपलभ्यते, भामत्यां, तात्पर्यटीकायां (पृ० ५७) चायं ग्रन्थो निर्दिष्टः। ८—ब्रह्मसिद्धिः—वेदान्तविषयकोऽयं ग्रन्थः। कालनष्टोऽयम्। न्यायकणिकायां (पृ० ८०) ग्रन्थोऽयं स्मृतः। ९—एषु सर्वेषु ग्रन्थेषु भामतीग्रन्थ एव अन्तिमो रचनादृष्ट्या सर्वातिशायी चेति दृश्यते। मतमिदं समीचीनमेवेति वाचस्पतिकृतग्रन्थाध्ययनतोऽपि विज्ञायते।

अन्येऽपि केचन ग्रन्था युक्तिदीपिकादयो वाचस्पतिरचिता इति केचन। न्यायरत्नग्रन्थस्यापि तेन काचित् टीका निर्मितेति केचित्। एते ग्रन्था भामत्यादिकृता वाचस्पतिनैव प्रणीता न वेति गरीयान् संशयः।

वाचस्पतेर्गुरुः खलु त्रिलोचननामा कश्चिद् बुध इति कथ्यते, तात्पर्यटीकायां वाचस्पतिनाप्युक्तम् 'त्रिलोचनगुरून्नीत...' इति (पृ० १३३)। त्रिलोचनः खलु प्रसिद्धो न्यायशास्त्रवेत्ता।

तत्त्ववैशारद्याः टीका—पातञ्जलरहस्यनाम्नी काचिद् व्याख्या कृता राघवानन्दसरस्वत्या। व्याख्येयं संक्षिप्ता। नेयमुपयोगिनीति प्रतिभाति। अयमद्वयभगवत्पाद-शिष्य इति अन्तिमपुष्पिकातो ज्ञायते।

तत्त्ववैशारद्यां भाष्यपाठभेदनिर्देशः—वाचस्पतिना भाष्यस्य केचन पाठभेदा निर्दिष्टाः, तथाहि—

अत्रापि कथंचिदित्यनुषञ्जनीयम्, क्वचित् तु पठ्यत एव (२।३९); क्वचित् पाठः कार्यविमुक्तिरिति (२।२७); क्वचित् पाठ ऐकभविक इति (२।१३); क्वचित् भावना समाधिरिति पाठः (३।२३); क्वचित् कर्मेति पाठः (३।१५); ये तु नाभिभूयते इति पठन्ति (३।१०); संस्कारमात्रोपभोगेनेति क्वचित् पाठः (१।१९); उपगृह्येति क्वाचित्कः पाठः (४।१४)।

तत्त्ववैशारदीधृतमत-सम्प्रदायाश्च[१]—टीकायामिमे संप्रदाया दृष्टयश्चो पन्यस्ताः—वैनाशिकः—४।१४; ४।१६; ४।२०; ४।२१; प्रावादुकाः—४।१६; विज्ञानवादी—४।१४; स्वमतम्—४।१०; नास्तिकः—४।१० ।

भाष्यगतापरेत्यादि-शब्द-व्याख्यानेऽपि वाचस्पतिना आचार्यनामानि सम्प्रदायनामानि च निर्दिष्टानि, यथा—अपरे–वैशेषिकाः ( ३।५३ ); भाष्ये यद्यपि पञ्चशिखसूत्रोदाहरणप्रसंगे पञ्चशिखनाम नोक्तं, तथापि वाचस्पतिः कण्ठतो.नाम सस्मार ( १।३; १।२५; १।३६; २।५; २।६; २।१३; २।१५; २।१७; २।१८; २।२०; ३।४१; ४।२२ ); यस्य तु = वैनाशिकमतम् ( १।३२ ); अपर आह = एकान्तवादिनं बौद्धमुत्त्थापयति ( ३।१३ ); केचित् = वैनाशिका बाह्यार्थवादिनः ( ४।२३ ); अपरे = विज्ञानमात्रवादिनः ( ४।२३ ); शास्त्रानुशासनम् = षष्टितन्त्रशास्त्रस्यानुशिष्टिः ( ३।१३ ) ।

विशिष्टानि व्याख्यानस्थलानि—दिङ्मात्रमुदाह्रियते–योगसूत्रे ( ३।३२ ) मूर्धपदमस्ति। अत्र मूर्धपदेन सुषुम्नानाम्नी नाडी लक्ष्यत इति मिश्रः। अपरमपि। किमर्थं पुनः २।६ सूत्रे शक्तिपदग्रहणं यतो हि द्रष्टृदृश्ये एव मूलभूतौ पदार्थौ इत्यत्राह मिश्रः—"दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोर्योग्यताल्क्षणं संबन्धं द्योतयितुं शक्तिग्रहणमि"ति । १।१७ टीकायां सास्मितसमाधिविषये वाचस्पतिव्याख्यानमेव सम्यगिति प्रतीयते । अत्र भोजव्याख्यानं भिक्षुव्याख्यानं वा न सर्वथा समीचीनमिति विज्ञेयम् ।

क्वचित् पुनः मिश्रव्याख्यानं सांशयिकं प्रतिभाति । १।२२ सूत्रव्याख्यान एकतत्त्वशब्देन 'ईश्वर' एव ग्राह्य इति मिश्रः, दृष्टिरियं न समीचीना, यद्यत्रेश्वर एव विवक्षितः स्यात् तर्हि सूत्रकृतेश्वरपदमेव प्रयुक्तं स्यादिति । तथैव १।२१ सूत्रव्याख्याने संवेगस्यार्थो वैराग्यमिति मिश्र उवाच, नेदं युक्तं प्रतिभाति । १।४४ व्याख्यायां निमित्तपदस्य यद् व्याख्यानं कृतं, तत्तु आंशिकमेवेति गम्यते । निर्माणचित्तप्रसङ्गे ( ४।५ ) 'एकस्तु प्रभुशक्त्ये'त्यादयो ये श्लोका उद्धृतास्ते योगसिद्धे मानवे प्रयोज्या इति दृष्टिर्न न्यायेन संगच्छते, मिश्रस्तु योगसिद्धमभिलक्ष्य श्लोका उद्धृतवान् इति दृश्यते ।

तत्त्ववैशारदीगतानि कानिचन विशिष्टानि स्थलानि—तत्त्ववैशारद्यां क्वचिद् विशिष्टो विचार उपलभ्यते सांख्ययोगविद्यादृशा, शास्त्रान्तरदृशा च । सुखग्रहणाय कानिचन स्थलानीह संगृह्यन्ते—

---

१. पुराण-श्रुति-स्मृति-वचनानि तत्त्ववैशारद्यां बहूनि संगृहीतानि; निष्प्रयोजनत्वात् न तेषां नामानीह संगृह्यन्ते ।

हिरण्यगर्भकृतयोगशास्त्रम्—१।१

योगिजनप्रसिद्धाऽन्वर्थसंज्ञा ( असंप्रज्ञातसमाधिः )—१।२

स्फटिकजपाकुसुमदृष्टान्तः—१।२

न खलु शालग्रामे किरातशतसंकीर्णे····( आभाणकः )—१।४

शब्दशास्त्रीयविचारः—१।६; १।११, १।१३, २।१३, २।१६, अन्यत्र च ।

दश दाडिमानीत्यादि········१।७ ( असंबद्धवाक्योदाहरणम् )

चैत्यवन्दनाप्रामाण्यम्—१।७

आगमिमतम्—१।१५ ( यतमानादिवैराग्यसंज्ञाः ),

वेदप्रामाण्यम्—१।२४

बुद्धादिकृतागमानामप्रामाण्यम्—१।२५

ईश्वरस्य षडङ्गता, दशाव्ययधर्माश्च—१।२५

कपिलस्वरूपं, तस्य सांख्ययोगप्राप्तिश्च—१।२५

हृदयपुण्डरीकवर्णनम्—१।३६

बुद्धिपक्षपातः—१।५०

प्रकृत्यैकत्वम्—२।२३

पुरुषनानात्वम्—२।२३

आचार्यलक्षणम्—२।२४

मृकण्डुकथा—२।२८

द्रोणाचार्यमरणम्—२।३०

वर्णलक्षणादिः—३।१७

अर्थविचारः—३।१७

स्फोटः—३।१७

अरिष्टनिर्वचनम्—३।२२

पार्थिवादिद्रव्यधर्माः—३।४४

माण्डव्यस्य विन्ध्यवासित्वम्—४।१

मुद्रणकाले येषां तत्त्ववैशारदीगत-वचनानामाकरस्थलानि न निर्दिष्टानि, तेषामिह लिख्यते—१।१ तत्त्ववैशारदीधृतं हिरण्यगर्भेत्यादिवचनं योगियाज्ञवल्क्येऽस्ति ( १२।५ ) । १।१६ गतानि वायुपुराणवचनानि न वायुपुराणे प्राप्यन्ते, परन्तु वायौ १०१ अध्याये एतत्सजातीयो विषयो विद्यते ।

शंकरकृतयोगभाष्यव्याख्यानम्[१]:—अद्यावधि अश्रुतपूर्वा अप्रकाशिता चेयं व्याख्या । अत एवास्य प्रकाशको धन्यवादार्हः । टीकेयम् प्रस्थानत्रयीभाष्यकारेण कृतेति विवरणग्रन्थ-सम्पादकानां मतम् । मतमिदमसमीचीनमित्युपरिष्टाद् विवेचयिष्यते ।

अत्र क्वचित् सम्पादकयोरनवधानं लक्ष्यते । तथाहि—भूमिकायां तैरित्थं प्रतिपादितं यदस्य व्याख्यानस्य प्रणेता प्रस्थानत्रयीभाष्यकारः शंकर एव । ग्रन्थे पुनर्यत्र 'अन्येषां व्याख्यानम्' इति शंकरेणोक्तम् ( पृ० ५५ ), तत्र 'वाचस्पतिकृतं तद् व्याख्यानम्' इति सम्पादकौ कथयतः । वाचस्पतिपूर्वकालिकः शंकरः 'अन्येषाम्' इति पदेन वाचस्पति-मतं लक्षयति—इति अहो मोहः सम्पादकयोः !

अपि चोक्तं ( पृ० २२ ) सम्पादकेन 'भाष्यमपि तयोः स्वरूपोपलम्भे सतीत्यादि'वाक्यमभिलक्ष्य—"इदानीन्तनमुद्रितपुस्तक इदं भाष्यं नोपलभ्यत" इति । मतमिदमनवधानमूलकमिति, यतो हि २।६ योगभाष्ये 'स्वरूपप्रतिलम्भेत्यादि'वाक्यं वर्तत एव । विवरणकारः पुनरपि ( पृ० १६१ ) भाष्यवाक्यमिदं सस्मार—अतः प्रतीयते न सम्पादकाभ्यां भाष्यविवरणग्रन्थः सुविचार्य सम्पादितः । क्वचिच्च मुद्रणप्रमादा दृश्यन्ते, ते च संस्करणान्तरे दूरीकरणीया इति ।

सूत्रपाठभेदाः—विवरणे सूत्रपाठभेदा बहुत्रोपलभ्यन्ते, तदुदाहरणानि च द्वितीये प्रकरणे द्रष्टव्यानीति ।

भाष्यपाठभेदाः—विवरणे व्यासभाष्यस्य बहवः पाठभेदा दृश्यन्ते । ग्रन्थसम्पादकैश्च सर्वत्र टिप्पण्यां पाठभेदा निर्दिष्टाः। केचन पाठभेदा इह संगृह्यन्ते—

---

१. Madras Government Oriental Series समाख्ये 'ग्रन्थ प्रकाशने' प्रकाशितमिदं विवरणम् । अस्य प्रधानसंपादकाः टी० चन्द्रशेखरन् महाभागाः, सम्पादकौ भूमिका-लेखकौ च श्रीरामशास्त्रि-कृष्णमूर्तिशास्त्रिणौ ।

१।७ पृ० २६—विन्ध्यश्चाप्राप्तेरगतिः; १।१७ पृ० ४७—एकरूपात्मिका संविदस्मिता, तमणुमात्मानमन्ववैत्यास्मीत्येतावत् सम्प्रजानीत इति; १।२६ पृ० ७४—यत्रावच्छेदार्थः कालो नोपावर्तते; १।४७ पृ० ११३—क्रमानुरोधी; २।४ पृ० १२९—स हि तदा प्रसुप्तस्तनुर्वेति; २।६ पृ० १४०—मरणं मान्वभूवं भूयासमिति; २।१३ पृ० १५०—कर्माशयः प्रचयविचित्रः; २।१३ पृ० १५७—न तु दृष्टजन्मवेदनीयस्य अनियतविपाकस्य वा अदृष्टजन्मवेदनीयस्य; २।१५ पृ० १६४—हातव्याहङ्कार""""; २।१८ पृ० १७७—परस्परतो भिन्ना अपि असंभिन्नशक्ति; २।१८ पृ०१८१—ग्रहणधारणविज्ञानोहापोहक्रियावचनयथान्यायावधारणाभिनिवेशाः। एवमन्येऽपि पाठभेदा उपलभ्यन्ते विस्तरमयाद् सर्वे पाठभेदाः संकलिताः।

क्वचिच्च विवरणे भाष्यपाठाधिक्यं दृश्यते, यथा २।१३ व्याख्याने 'त्रिविपाकारम्भो वा जन्मायुर्भोगहेतुत्वादिति' वाक्यांशो द्विविपाकपरभाष्यवाक्याद् अनन्तरं पठितः। नायं पाठोऽन्यत्र।

कोऽयं विवरणकारः—विवरणसम्पादकयोर्मतेन प्रस्थानत्रयीभाष्यकारः शंकर एवास्य प्रणेतेति। मतमिदं न युक्तिसहम्। यदि नाम शंकराचार्यो भाष्यमिदमद्रक्ष्यत्, न सोऽध्यासभाष्येऽकथयिष्यत् यच् चिद्रूप आत्मा भोक्ता न भवितुमर्हति ( द्र० पृ० २२–२३ )। तथैव तप्यतापकभावविषये शंकरेण ये दोषाः प्रदत्ताः, सांख्यसंमतपुरुषार्थविषये च सांख्यपक्षो यथा तेन दूषितस्तेन गम्यते न शंकरो भाष्यमिदं दृष्टवानिति ( पृ० २२ )। भाषाप्रयोगदृष्ट्याऽपि विवरणं न शारीरकभाष्यसदृशम्। उभयोर्ग्रन्थयोरेकविषयत्वे सत्यपि विवरणगतभाषाया अप्रौढत्वमेव ज्ञापयति यदिदं विवरणं न शंकरलेखनीतः प्रसूतमिति।

विवरणकार-जयमङ्गलाकारयोरैक्यम्—अस्माभिश्चिन्त्यते यत् सांख्यकारिका-जयमङ्गलाकारः शंकरो भाष्यविवरणस्य प्रणेता भवितुमर्हति।

अत्र युक्तयः—

१—पुष्पिकासाम्यमुभयत्र। २—जयमङ्गलायां विवरणे च शब्दानधिकृत्य प्रकृति-प्रत्यय-समासादि-विषयको निष्प्रयोजनो विचारो बहुत्र कृतः। एतादृशं शैलीसाम्यं नूनमुभयोरेकत्वं ज्ञापयति। ३—क्वचिच्च विचारसाम्यम्।

अथात्र जयमङ्गलागतशब्दविचारस्थलानि प्रस्तूयन्ते—

१–दुःखानां त्रयं दुःखत्रयम् ( १ का० ); २—तदवघातके"" तृजकाभ्यां षष्ठी-समासप्रतिषेधः तत्प्रयोजको हेतुश्चेति न भवति ( १ का० ); ३—अनुश्रवो

वेदः । श्रवः श्रृ दोरप् , तत्र भवो हेतुरानुश्रविकः, अध्यात्म्यादिः ( २ का० ), ४—पुरं शरीरं तस्मिन् वसतीति पुरुषः, नैरुक्तोऽत्र विधिः ( ३ का० ); ५—इतिहैव ऐतिह्यं स्वार्थे ष्यञ् ( ४ का० ); ६—आश्रीयन्ते इत्याश्रयाः। कर्मण्यण् ( १२ का० ); ७—जनयन्तीति जननाः । कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् । अनेकार्थत्वाच्च धातूनां बोधनार्था द्रष्टव्याः ( १२ का० ); ८—अस्मादेव प्रयोगात् उपस्थशब्दः पुंलिङ्गोऽप्यस्तीति गम्यते ( २६ का० ), ६—करणं करोतीति; कृत्यल्युटो बहुलमिति कर्तरि ल्युट् ( ३२ का० ); १०—सृज्यत इति सर्गः ( ५२ का० ); ११—पवित्रमिति । पुनातीति कृत्वा ( ७० का० ) ।

विवरणगतानि शब्दविचारस्थलानि—१-३।१७ सूत्रव्याख्याने प्रकृति-प्रत्ययानवस्थितत्वमधिकृत्य बहून्युदाहरणानि प्रदत्तानि; २—गोष्पदं सेविता-सेवितप्रमाणेषु इति पाणिनिसूत्रमुद्धृतम् (२।५); ३–नञ्वार्त्तिकम् (२।२।६) इत्युक्त्वा अब्राह्मणमानयेत्युक्तम्....(२।५) ४–आध्यात्मिकम्।अधि आत्मनीति अध्यात्मम् । तत्र भवमाध्यात्मिकम् अध्यात्मादिभ्यष्ठक् इत्युपसंख्यानात् ठक् ( १।३१ ); ५—वार्तिककारेणोक्तं सिद्धन्तु....( १।६ ); ६—द्विचन्द्रस्थले द्विचन्द्रीति कथं न भवतीति १।८ भाष्यव्याख्यायां विचारितम्; ७—सर्वभूमि-पृथिवी इत्यैश्वर्यार्थीयोऽण् प्रत्ययः, अनुशतिकादित्वाद् उभयपदवृद्धिः ( १।१ पृ० ५ ); ८—अपि चैवं हि स्मृतिः किञ्चिदव्ययम्........( महाभाष्य १।१।३७ ) ( १।१ पृ० ४ ); ६—प्रतिसिद्धवस्तुधर्मा—समासान्तः चिन्त्य-समाधिः ( १।६ ) ।

उपर्युक्तेषु स्थलेषु निष्प्रयोजना शब्दचर्चा कृतेति दृश्यते।एतादृशासाधारण-मनोवृत्तिसाम्याद् उभयोः कर्ता एक इति संभाव्यते । जयमङ्गलाकारो योगसूत्रं योगभाष्यं च अपाठीदिति विज्ञायते, अतो यदि पातञ्जलयोगप्रामाण्यवादी जयमङ्गलाकारो योगभाष्यटीकां व्यरचयत् तर्हि न विप्रतिपत्तेरवसरः कश्चित् । अभावादिप्रमाणनिरासे उभयोः समाना दृष्टिरवलोक्यते ( द्र० योगसू० १।७; सां० का० ४ ) ।

विवरणकारकालः—इदं दृश्यते यद् विवरणे वाचस्पतिमतमुद्धृतम् ( १।२४ ), अतो विवरणकृद् वाचस्पतेरर्वाक्कालिक इति निश्चितम् । यदि जयमङ्गलाकार एव विवरणकार इत्यभ्युपगम्यते, तर्हि जयमङ्गलाकारकालो विचार्यः।स च वाचस्पतेरनन्तरं प्रादुर्बभूवेति बलदेवोपाध्यायः (भारतीय दर्शन

पृ० ३२१ )[1] । इदमपि चिन्तनीयं यद् आपस्तम्बधर्मसूत्रान्तर्गताध्यात्मपटल-विवरणकारो योगभाष्यविवरणकारश्चाभिन्नौ नवेति । तथैव विष्णुसहस्र-नाम-भाष्यकारो विवरणकारो न वेति गवेषणीयो विषयः ।

विवरणप्राचीनानि भाष्यव्याख्यानानि–इदं प्रतीयते यद् विवरणात् प्राक् तत्त्ववैशारदी अन्याश्च व्याख्या काश्चन प्रणीता इति। तथाहि—३।६ भाष्य-विवरणे अन्यत्र च यद् व्याख्यान्तरमुदाहृतं, न तत् सर्वथा मिश्र-भिक्षु-व्याख्यानुसारि। अपि च सूत्रपाठे यानि पाठवैलक्षण्यानि ( २।७–८ सूत्रयोः, २।१६ सूत्रे च ) प्रदर्शितानि, तैर्ज्ञायते विवरणकारीया परम्पराऽपि मिश्रभिक्षुतः पृथग्रूपेणासीदिति ।

विवरणव्याख्यावैशिष्ट्यम्—क्वचिच्च विवरणगतं व्याख्यानमत्युत्कृष्टं प्रतिभाति । तथाहि—२।४७ सूत्रगतानन्त्यसमापत्तिव्याख्यान उक्तम्—"अनन्तं विश्वम्, अनन्तभाव आनन्त्यम्" इति। योगाभ्यासदृष्ट्येदं व्याख्यान-मत्युपयोगि, मिश्र–भिक्षुभ्यां च शेषनागपरतया यद् व्याख्यानमाचरितं तन्न योगोपयोगीति।ईश्वरानुमानविषये विवरणे बहूक्तं ( पृ० ५८–७२ ), एतेन तस्य न्यायशास्त्रज्ञानप्रकर्षो विज्ञायते । ३।१३ विवरणे 'तदेतत् त्रैलोक्यम्' इति भाष्यवाक्यं व्याख्यातम् । न्यायभाष्य-वार्त्तिकादिषु भाष्य-वाक्येऽस्मिन् विरुद्ध-हेत्वाभासरूपो यो दोषः प्रदत्तः, स च समाहितो ग्रन्थकृता । अनुवृत्तिविषयक-स्तर्कोऽपि दृश्यते, यथा–१।२ सूत्रे किमर्थं पुनर्योगपदग्रहणमिति शङ्काया उत्तरं प्रदत्तमत्र। तथैव कथं पुनश्चितिः चितिशक्तिरित्युच्यते–इति विवृतं ग्रन्थ-कृता ( १।२ ) । न्यायादिमतानि च बहुत्रोल्लिखितानि खण्डितानि च (१।४, १।७, १।४३,) । बुद्ध-ऋषभादीनां ज्ञानं न निरतिशयमित्युक्तमत्र ( १।२५ ) । १।४० विवरणे संक्षिप्ता, विशाला, विकरणी चेति तिस्रो धारणा उक्ताः । एतादृशी गणनापद्धतिर्नान्यत्रोपलब्धा ।

विज्ञानभिक्षुकृतं योगवार्त्तिकम्[2]—अयं विज्ञानभिक्षुरतिप्रथितः सांख्या-

---

१. जयमङ्गलाकारः वाचस्पतेरपि पूर्वंभव इत्युक्तमुदयवीरशास्त्रिणा । सोऽयं पक्षः साधुरेवेति न कथयितुं शक्यते । यतो हि विवरणकारजयमङ्गलाकारयोरैक्यं नास्माभिः सुप्रमाणितम्, संभावितरूपेणैव प्रतिप्रतिपादितम्, अतो जयमङ्गलाकर्तृकाल एव विवरणकर्तृकाल इत्यपि नैकान्ततः कथयितुं शक्यते ।

१—नामत इदं प्रतीयते यद् वार्त्तिकपद्धत्या व्याख्येयं रचितेति । 'उक्तानुक्त

चार्यः । यद्यपि व्याख्यानविषये योगपदार्थविषये चास्य न महती अन्तर्दृष्टिरवलोक्यते, तथापि स्मृति-पुराण-वचनैः सांख्ययोगमतपरिपोषणमनेन सुष्ठु कृतमिति दृश्यते। ग्रन्थोऽयं सांख्यभाष्याद् अनन्तरं रचित इति २।२० वार्त्तिकदर्शनादनुमीयते । वार्त्तिकात् प्राग् ब्रह्ममीमांसाभाष्यं प्रणीतमिति वार्त्तिकग्रन्थतः ( २।२२, ३।५५ ) प्रतीयते ।

अस्य समयः खलु ईसवीयषोडशशतकमध्यभाग इति केचन कथयन्ति[1] । श्री उदयवीरशास्त्रिवर्यस्तु पुष्कलाभिर्युक्तिभिरस्य कालः खीष्टीयचतुर्दशशतकमध्यभाग इति निर्धारितवान्[2] । इदमेव समीचीनं मतमित्यास्माकीना दृष्टिः ।

विज्ञानभिक्षुणा इमे ग्रन्थाः प्रणीताः—१ योगवार्तिकम्; २–सांख्यषडध्यायीभाष्यम्; ३–ब्रह्मसूत्रविज्ञानामृतभाष्यम्; ४–सांख्यसारसंग्रहः; ५–योगसारसंग्रहः; ६–उपदेशरत्नमाला—विज्ञानामृतभाष्ये (पृ० ६२) उक्ता, नोपलभ्यते; ७–गीताभाष्यम्, नोपलभ्यते ।

योगवार्त्तिकं खलु बहुधा प्रकाशितम्। यद्यपि ग्रन्थकारः क्वचिद् वाचस्पतिमतं चिखण्डयिषति ( द्र० १।१६, १।२१ ) तथापि वाचस्पतिव्याख्यानमिव नास्य व्याख्यानं तर्कन्यायपेशलमिति प्रेक्षावतां निर्णयः । स च सम्यक् ।

व्याख्याप्रसंगे बहुत्र संप्रदायान्तराणां वचांसि मतानि चापि संकलितानि ग्रन्थकृता । अत्र कानिचन खलु प्रदर्श्यन्ते–नास्तिकः—२।१५; वैनाशिकमतम्–१।३२, १।४३, ४।१६; क्षणिकवादः–१।३२; आधुनिकमतम् ( प्रायेण नव्यवेदान्तिमतम्); १।२५, ४।२१, ३।३५, २।१६, २।१३), केचित्–१।२४; कश्चित्–२।२५, ३।५२; विज्ञानवादः–४।२३, ४।१५, ४।१४; न्यायवैशेषिकदर्शनम्–४।२१, ३।१३, २।२०, २।५; वेदान्तमतम् ( प्रायेणाधुनिकवेदान्तमतम् )–४।१६; दृष्टिसृष्टिवादः–४।१४; अनिर्वचनीयतावादः–३।१३; वेदान्तिब्रुवः–३।३५, ३।१३, २।२२, २।१६; योगशास्त्रविशेषः ३।३०; योगशास्त्रान्तरम्—३।२६, ३।२८; तन्त्रान्तरम्–३।२७, ३।४; ब्रह्मविवर्ततावादी–३।१५; ब्रह्माद्वैतवादः–३।१४ ।

---

दुरुक्तचिन्ताकरत्वं वार्त्तिकत्वम्' इति मतं यद्यभ्युपेयते, तर्हि नेदं वार्त्तिकमपि तु टीकैवेयं व्याख्येति । भिक्षुशब्दो नामाङ्गभूतः, नायं ग्रन्थकारो बौद्ध इति ।

१—द्र० कीथकृतः The Samkhya System ग्रन्थः, पृ० ११४।

२—सां० द० इ०, पृ० ३०२–३०४।

भाष्यगतमतनिर्देशस्थलेऽपि भिक्षुः संप्रदायनाम निर्दिशति । यथा—केचित् (३।२३) = बाह्यार्थवादिनः; अपरे ( ४२३ ) = विज्ञानवादिनः; अपरे ( ४।१० ) = सांख्याः; अपरे ( ३।५२ ) = वैशेषिकाः; कैश्चित् ( ३।१३ ) = बौद्धोक्तं दूषणम् ; अपरः ( ३।११ ) = स्वरूपान्यथात्ववादी बौद्धः ।

योगसूत्रस्य भाष्यस्य चानेके पाठभेदा योगवार्त्तिकतोऽवगम्यन्ते । अन्यत्र तद्विषयको विचारः करिष्यते, अत्र खलु पाठभेदस्थलानि निर्दिश्यन्ते। तथाहि–१।१७, १।२१, १।२५, २।२३; भाष्यपाठभेदस्थलम्–१।२४, १।१० ( द्विः ), ३।३२, ३।४१, ४।१३ । क्वचिच्च प्रचलितभाष्यपाठस्य प्रामादिकत्वं स्पष्टमुक्तवान् भिक्षुः ( ३।३२ ) ।

**भिक्षुव्याख्यासमीक्षा**—भिक्षुव्याख्या यद्यपि बहुत्र भाष्यार्थावबोधकारिणी, विशिष्टसूचनाप्रदा च, तथापि क्वचिद् भिक्षुव्याख्यानं विचारपदवीमारोहति । योगशास्त्रानभ्युपगतानि मतान्यपि तेनोक्तानीति महच्च् चित्रम्[1] । मन्ये तात्कालिकमतैः सह समन्वयकरणमावश्यकमिति कृत्वा भिक्षुस्तथा निरदिक्षत् । न योगविषयिण्यः सूक्ष्मा गूढा वा दृष्टयो योगवार्त्तिके दृश्यन्ते, यद्यपि श्रुतिस्मृत्यादिवचनभूयिष्ठोऽयं ग्रन्थः[2] ।

४।१० भाष्ये शरीरपरिमाणाकारं चित्तमित्यपरेषां मतमित्युक्तम् । सांख्यीय-मतभेदोऽयमिति भिक्षुः । तदिदं कथनं न सम्यक् , न खलु सांख्यदृष्ट्या शरीरपरिमाणाकारं चित्तं भवितुमर्हति, चित्तस्याध्यात्मिकद्रव्यत्वात् । तथैव ४।११ सूत्रे यत् फलमिति पदमस्ति, तत् पुरुषार्थवाचकमिति भिक्षुः । तदिदमसंगतम् , यतो हि भोगापवर्गौ पुरुषार्थौ दृश्यदर्शनहेतुकावेव सांख्यीय-

---

१. 'स्वर्गिणां भारतवर्षमागत्य लीलामानुषविग्रहेण प्रयागादौ कर्मानुष्ठानस्य तत्फलस्य च श्रवणात्' ( २।१२ ), न खलु एतादृशकर्मकारी कश्चिल्लीलया मानुषशरीरं गृह्णाति । 'ये तु प्रपञ्चस्य ब्रह्मविवर्तवादिनः तैः सह च नास्माकं विरोधलेशोऽपि वर्तते' ( ३।१५ ) इति भिक्षुमतमपि न योगानुसारि । ३।१८ वार्त्तिके उक्तं यद् आवट्य आचार्यो लिङ्गशरीरविहारीति, इदमपि मतमन्याय्यं, न खलु केवलं लिङ्गशरीरं स्थातुमुत्सहते ।

२. योगशास्त्रान्तराणि तु भिक्षुणा बहुत्र स्मृतानि ( ३।२६, ३।२८ ) । क्वचिच्च गुरुमुखस्यावश्यकतापि तेन स्वीकृता ( ३।३० ) । तन्त्रान्तरमतमपि तेन निर्दिष्टम् ( ३।४ ) । क्लेशेति तान्त्रिकी संज्ञाऽविद्यादीनामिति चोक्तम् ( २।३ ) ।

दृष्ट्या, न च तौ वासनायाः फलभूतौ भवितुमर्हतः । ४।३१ भाष्ये 'अन्धो मणिमविध्यदि'त्यादिः श्लोको बौद्धं प्रत्युपहासपरतया भिक्षुणा व्याख्यातः। यतो हि बौद्धैरपि ज्ञानस्यानन्त्यं स्वीक्रियते, अतो भिक्षुव्याख्याऽप्रामाणिकीति ।

भास्वतीकारः स्वामी हरिहरानन्दारण्यः—अस्याचार्यस्य आविर्भाव-तिरोभावदिवसौ यथाक्रमं ४-१२-१८६६, १६-४-१९४७ ई० चेति। गुहायां रुद्धः सन्नयं मर्त्यदेहं जहाविति । एतदनुशासनानुशासितो मठोऽद्यापि वर्तते ( बिहारराज्यान्तर्गतमधुपुरनगरे ) । वंगीयोऽयम् ।

सांख्यं योगं चाश्रित्य यतिवरेणानेन बहवो ग्रन्थाः प्रणीता वंगादिभाषासु[1]। कापिलाश्रमीयपातञ्जलयोगदर्शननामधेयः सुप्रसिद्धो ग्रन्थ एतत्कृती विराजते, यत्र योगविद्याविषयकोऽतिसूक्ष्मो विचारोऽवलोक्यते । सांख्ययोगमतस्थापनं च अभिनवया पद्धत्या कृतम् । जडविज्ञानपद्धत्याऽपि आर्षाणि सत्यमतान्य-नेन प्रमाणीकृतानि ।

भास्वतीटीका खलु संक्षिप्ता, पदबोधिनी, उपोद्घातप्रधाना, शङ्काविकल्प-हीना चेत्युक्तम् ( ग्रन्थादौ ) । योगभाष्यार्थ एवात्र न्यायेन विशदीकृतः । न परमतखण्डने ग्रन्थकृता प्रयतितमत्रेति दृश्यते ।

भास्वती-ग्रन्थकारस्य बहुत्र अपूर्वा योगजा च दृष्टिर्न्यायदृढाऽवलोक्यते । दिङ्मात्रमुदाह्रियते—

कपिलस्य हिरण्यगर्भसंज्ञा (१।१)। एकाग्रभूमिकस्य चेतसः तत्त्वविषयिणी प्रज्ञा संप्रज्ञानम् (१।१) । चितिशक्तिरनन्ता—अन्तत्वारोपणायोग्या च (१।२)। चित्तं सान्निध्यादेव पुरुषस्य भोगापवर्गौ आचरति, सान्निध्यमत्र एकप्रत्ययगतत्वं, न च दैशिकं सान्निध्यम् (१।४)। न हि पुरुषख्यातिं विना संस्कारस्य सम्यग् नाशः स्यात्, चित्तातिरिक्तस्य द्रव्यस्यानधिगतत्वात् (१।१६)। तमणुमात्रमात्मानम्—अणुवद्व्याप्तिहीनमभेद्यम् आत्मानं महदात्मानम्। अहं-बोधस्य तत्र अहंकृतिरूपायाः संकुचितवृत्तेरभावात् तस्य महदिति संज्ञा, न तु बृहत्त्वात् (१।३६)।

न चाविद्याऽनिर्वचनीया, किन्तु अतद्रूपप्रतिष्ठं मिथ्याज्ञानमित्यस्या निर्वचनम् (२।५)। चित्तप्रलयस्तु परवैराग्यमन्तरेण न भवति। पर-

---

१. परभक्तिसूत्रम्, सांख्यतत्त्वालोकः, शिवोक्तयोगयुक्तिः, योगकारिका, पञ्च-शिखादीनां सांख्यसूत्रम्, श्रुतिसारः, शान्तिदेवकृतबोधिचर्यावतारग्रन्थस्य भाषान्तर-करणम्, धर्मपदग्रन्थस्य भाषान्तरकरणम्, The Samkhya Catechism; कर्मतत्त्व ( वंगभाषामयो ग्रन्थः ) ।

वैराग्यं च निर्गुणपुरुषख्यातेरेव उत्पद्यते ( २।११ )। शून्यत्वानन्दमयत्व-सर्वज्ञत्वादयो दृश्यधर्माः, न ते द्रष्टुः निर्गुणस्य औपनिषदपुरुषस्य लक्षणानि ( २।११ )। न हि स्वप्रकाशद्रष्टुरुपदर्शनं विना आत्मभावः प्रवर्तेत ( २।१५ )। अहं सुखी अहं दुःखीत्यात्मबुद्धेरपि यो द्रष्टा स भोक्ता (२।१८)। पुरुषार्थता बुद्धिभेद एव, बुद्धिस्तु गुणपुरुषसंयोगजाता, अतो न पुरुषार्थता गुणकारणम् ( २।१६ )। अस्मीति बोधस्य उत्तरक्षणे मामहं जानामीत्यात्मको यः प्रतिबोधस्तस्य हेतुभूतः पूर्णः स्वबोध एव प्रतिसंवेदिशब्देन लक्ष्यते ( २।२० )। एवमन्येष्वपि पादेषु दृश्यते।

एभ्यो व्याख्यानेभ्योऽन्यद् व्याख्यान्तरमासीद् नवेति अन्वेष्यम्। विवरण-टीकातः प्रतीयते यदन्यदपि व्याख्यानमस्य भाष्यस्यासीदिति। मिश्र-भिक्षु-परम्परातो भिन्ना खलु विवरणपरम्परेति न विस्मरणीयम्। 'किताब पातञ्जल-' नामधेयं कमपि ग्रन्थम् अलबेरुणिर्नाम बुधः सस्मार ( १०३० ई० ), अतो जात्यन्तरसंचारीदं दर्शनमभूदिति विज्ञायते।

---

## चतुर्थं प्रकरणम्*

### प्राचीनाः सांख्ययोगाचार्याः

सनातनी सांख्ययोगविद्या—अथेह वयं कपिलादीनामितिवृत्तमधिकृत्य लघु विचारयामः। यद्यपि कपिलः खल्वादिमः सांख्ययोगप्रवक्तेत्यस्माकं मतं, तथापि ततः प्रागपि ऋषिसमाजेऽध्यात्मयोगविद्या प्रचलितासीदित्यत्र न कापि विप्रतिपत्तिः। जातिस्मराः पुरुषाः सर्गादिकाले जायन्ते, ते च सहजातज्ञानसंस्कारबलेन प्रथमजहिरण्यगर्भप्रणिधानपरायणा अपि भवन्ति, ततश्च सगुणनिर्गुणात्मज्ञानधाराऽपि प्रचलतीति न्यायतः स्वीकरणीयम्। अत एव कपिलप्राग्भवेषु वैदिकग्रन्थेषु सगुणनिर्गुणात्मज्ञानपूर्वकं वेदनमुपलभ्यते (तदेतदुपरिष्टाद् उदाहरिष्यते)।

किमर्थं तर्हि 'आदिविद्वान्' इत्युपाधिः कपिले प्रयुज्यत इति ? उच्यते—द्विविधायामात्मविद्यायां के च पदार्थाः तत्त्वतः प्रमेयाः, प्रमेयेषु कियन्तो वा विभागाः, तेषु च कार्यकारणपरम्परा कीदृशी—इत्येतेषां विषयाणां दर्शनानुगतपद्धत्या विश्लेषणपूर्वकं प्रवचनं खलु सर्वादौ भगवता कपिलेन कृतम् अत एव स 'विद्वत्'–पदेनाभिधीयते। भवन्तु नाम ततः प्रागपि सगुणनिर्गुणात्मज्ञानसंपन्ना ऋषयः, परन्तु न त आन्वीक्षिकीपद्धत्यनुसारेणात्मविद्यां विशदीचक्रुः। आत्मज्ञानस्य व्युत्पादनं खलु पारमर्षस्य तन्त्रस्य मुख्यं कार्यमिति विज्ञायते।

आन्वीक्षिकीमयी ब्रह्मविद्या—आन्वीक्षिकीपद्धत्यनुसारेणात्मविद्यावर्णनं खलु कापिलैरासुरिपञ्चशिखादिभिः प्रवर्तितम्, अत एव ते सर्वे तर्पणार्हाः कृताः। ततः प्रवर्तितश्च सांख्ययोगसंप्रदायः। अध्यात्मविद्याप्रतिपादनपरशास्त्रप्रणयनविषयेऽयं मातृकाश्लोकः—

उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः।
[1]अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत॥ (शान्ति० ३५१।६)

---

* अस्मिन् प्रकरणे योगभाष्यस्मृतानां योगभाष्योपजीव्यभूतानां प्रसिद्धानामाचार्याणामेवेतिवृत्तं लिख्यते समासतः। विमतखण्डनपूर्वकमितिवृत्तं खलु ग्रन्थान्तरे द्रष्टव्यम्।

१. अध्यात्मशास्त्रस्वरूपमाह हरिः—रागादींश्च बुद्धेरुपप्लवान् अवगम्य तदपघातहेतुज्ञानोपायभूतानि अध्यात्मशास्त्राणीति। (वाक्यप० १।१४७ स्वोपज्ञटीका)। अतो

यतो हि निर्गुणपुरुषादितत्त्वख्यापनपरेयं विद्या सर्वतः सारभूता, अतो मन्वादिस्मृतिषु वैद्यके च स्वसिद्धान्तोपपत्तये गुणादीनि तत्त्वान्यभ्युपगतानि । अत एव प्रवर्तते च युक्तः प्रवादो यत् सांख्यत एव सर्वशास्त्रगता मूलभूताः प्रमेयाः समागता इति, अत एव 'सांख्या वृद्धा' इति प्रवादः प्रचलति। कृष्ण-द्वैपायनश्च 'सांख्यागतं तन्निखिलं नरेन्द्र' ( शान्ति ३०१।१०८ ) इत्युक्त्वा सर्वदर्शनशीर्षभूतं सांख्यज्ञानमभ्युपगतवान् । आन्वीक्षिकीप्रधानत्वाद् इदं शास्त्रं प्रबोधनकरमित्युच्यते ( शान्ति० ३०७।४५ ) ।

कपिलपूर्वभव आत्मज्ञानोपदेशः—कपिलपूर्वमात्मज्ञानमिह विचार्यते । कपिलप्रशिष्यः पञ्चशिखः किल जनदेवजनकसमकालभवः ( शान्ति० २१८–२१९ अ०), जनकश्च इक्ष्वाकुवंशीयो नृप इत्यत इक्ष्वाकोरनन्तरं कपिल आविर्बभूवेति कथनीयमेवेतिहासदृशा। इक्ष्वाकुपितृचरणस्य विवस्वतः काले नासीदात्मज्ञानमिति न शक्यते वक्तुम् । एतत्कालप्रोक्ता ये प्राचीना वेदभागा अद्यापि प्रचलितास्तेषु सगुणमात्मज्ञानं विशेषतो दृश्यते, निर्गुणमपि क्वचिदेवास्फुटरूपेण। ऋक्संहितायां शाकलाख्यायां 'विमे कर्णा·····' (६।९।६) इति मन्त्रे निर्गुणात्मज्ञानमस्पष्टरूपेणावलोक्यते । अस्माभिर्मन्यते कपिलात् प्राक् सगुणमात्मज्ञानमेवाविर्बभूव कृत्स्नशः; निर्गुणं च क्वचिदेव, तच्चापि ज्ञानं तत्त्वज्ञानपूर्वकं सयुक्तिकं न प्रसिद्धमासीदिति । परमर्षिः कपिलः किल पूर्वजन्मीयसहजातसंस्कारतो हिरण्यगर्भाभिध्यानाच्च निर्गुणमात्मतत्त्वं कृत्स्नशो ज्ञातवान्, ससाधनां च तां विद्यां कर्मकाण्डविदे सगुणात्मज्ञानयुक्तायासुरये प्रोवाच। अत एव श्वेताश्वतरे ( इयमुपनिषद् नातिप्राचीना ) कपिलस्य ज्ञानप्राप्तिः श्रूयते (५।२), न प्राचीनासु वेदसंहितासु ब्राह्मणग्रन्थेषु वा । प्राचीनेषु ब्राह्मणेषु मनोर्नाम गृहीतं न कपिलस्य, अतो ज्ञायते यत् कर्मकाण्डप्रतिपादकवेदभागप्रवचनानन्तरं कपिल आविरास । तदनन्तरं चाध्यात्मविद्या सोपपत्तिका सगुणनिर्गुणज्ञानमयी तत्त्वज्ञानपूर्वा प्रचद्रूपाऽभवद् ऋषिसमाजे । अतएवोपनिषत्सु बहुत्र सयुक्तिकमात्मज्ञानं वर्णितं[1], न तथा दृश्यते संहितायाम्। ब्राह्मणे च क्वचिदेव। विषयोऽयमन्यत्र विशदीकरिष्यते ।

---

ज्ञायते कार्यकारणपरम्परादिप्रकटनपरेयम् अध्यात्मविद्याऽत एव वेद–तदङ्गादिभ्यः पृथक्कृत्य विद्येयं गण्यते स्म पुरा, यथाह हारीतः–"वेदा अङ्गानि धर्मः अध्यात्मं विज्ञानं स्थितिश्चेति षड्विधं श्रुतम्" इति ( स्मृतिचन्द्रिका भाग ३, पृ० २६० धृतं वाक्यम् ) । चिन्ताप्रधानं भवत्यध्यात्मशास्त्रं, सा चिन्ता पुनः सांख्यानुयायिनीति ( शान्ति० १९४।१–६३ ) ।

१ आहारशुद्धौ सत्त्वशुद्धिरित्यादिवचने ( छान्दोग्य० ७।२६।२ ) कार्यकारण-

सांख्ययोगवेत्तार आदिमा वेदप्रवक्तार ऋषयः—प्रागुक्तमृषीणामात्मज्ञानवेत्तृत्वम् । अत्रेदं विज्ञेयम्–ऋषयः खलु तारकज्ञानान्विता इति 'ऋषयो दर्शनाद्' इति निरुक्तव्याख्यानावसरे दुर्ग आह ( २।३ पाद ) । ऋषिप्रतिष्ठं यदार्षज्ञानं तत् सांख्ययोगशास्त्रान्वितमेवेति वायौ ( ५६ अ० ), ब्रह्माण्डपुराणे ( १।३२ अ० ), मत्स्यपुराणे ( १४५ अ० ) च विस्तरश उक्तम्। अत्र प्रकृतिमहदादीनां नामानि कण्ठत उक्तानि । अत आर्षं ज्ञानं सांख्ययोगान्वितमिति सिद्धम् ।

योगज्ञापकाः संहितादिगता मन्त्राः—संहितादिप्राचीनवैदिकग्रन्थेषु योगाभ्यासज्ञापकानि वचनान्युपलभ्यन्ते–तं पाकेन मनसाऽपश्यम्' ( ऋग् १०। ११४।४ ), उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योति रुत्तमम् (ऋग्० १।५०।१०), धीमहि (ऋग्० ३।५२।१०), अन्तर्हृदा मनसा पूयमानाः ( ऋग्० ४।४८।६ ), उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय (ऋग्० ७।५६।१२), सतो बन्धूनसति निरविन्दन् हृदि प्रतीष्या कवयो मनुष्याः ( ऋग्० १०।२६।४ ), यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ( ऋग्० १।१६४।३६ ), हृदा पश्यन्ति मनसा मनीषिणः ( ऋग्० १०।१७७।१ ), युञ्जते मन उत युञ्जते धियः (ऋग्० ५।८१।१), वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ( माध्यन्दिन० ३१।१८ ) इति ।

सांख्ययोगदृष्टिरपि मन्त्रेषु अवलोक्यतेऽविशदरूपेण—द्वा सुपर्णा सयुजा सखाया ( ऋग्० १।१६४।२० ), भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त ( ऋग्० १०।७२।४ ), सप्तार्धगर्भा भुवनस्य रेतः ( ऋग्० १।१६४।३६ ), धाता यथापूर्वमकल्पयत् ( ऋग्० १।१९०।३ ), अष्टचक्रा नवद्वारा देवानां पूरयोध्या...... तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ( अथर्व० १०।२।३१-३२ ) पुण्डरीकं नवद्वारं........विदुः (अथर्व० १०।८।४३) इति। हिरण्यगर्भ-पुरुष-वाक्सूक्तादिषु सगुणात्मज्ञानस्य परा काष्ठाऽवलोक्यते ।

ब्राह्मणारण्यकेष्वपि योगलिङ्गानि वचांसि दृश्यन्ते। अत्र खलु पिण्डब्रह्माण्डैक्यपरं वाक्यम् (ऐ० आ० ३।१।२), अन्तर्यज्ञवर्णनम् ( तै० आ० २।१७, ३।१, ३।४, ३।६ ) प्राणोपासनपराणि वाक्यानि, मनसि वै सर्वे कामा मनसा हि सर्वान् कामान् ध्यायति (ऐ. आ. १।३।२), योऽहं सोऽसौ योऽसौ सोऽहमिति (ऐ.

---

परम्परोक्ता । 'इन्द्रियेभ्यः परा ह्यर्थाः.........परा गतिः' ( कठ० ३।१०–११ ) इत्यत्रापि स्थूलसूक्ष्मक्रमानुसारेण प्रमेयाः स्थापिताः । कपिलादनन्तरमेव आन्वीक्षिकीप्रधाना एषा दृष्टिः प्रवर्तिता, तत्प्राग्भवेषु वैदिकग्रन्थेषु च सामान्यत आत्मज्ञानविवरणं प्रदत्तम् ।

आ. २।३।४), अभिध्यायन् ( तै. आ. २।२ ), वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुः ( तै. आ. २।७ ), अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् ( तै. आ. २।६ ) इत्येतादृशानि स्थलान्यवलोकनीयानि। योगप्रतिपादिता अन्ये विषया अपि आरण्यकेषु दृश्यन्ते यथाऽरिष्टवर्णनम् ( ऐ. आ. ३।२।४ ) । अधिदैवाध्यात्मैक्यदृष्टिरपि योगशास्त्रीया ( ऐ. आ. २।१।२, ३।२।२ ) । निरुक्तेऽपि दृष्टिरियं बहुधोपवर्णिता ।

मनःप्राणादिविषयका ब्राह्मणग्रन्थसन्दर्भाश्च योगदृष्ट्यनुसारिण इति विज्ञेयम्। 'अपरिमिततरमिव हि मनः परिमिततरेव हि वाक्' इति शातपथश्रुतिः ( १।४ ४।७ ) योगविद्ययैव विशदीकरणीया । तथैव 'मनो वै प्राणानामधिपतिर्मनसि हि सर्वे प्राणाः प्रतिष्ठिताः' ( शत० १४।३।२।३ ) 'मनो हृदये श्रितम्' ( तै. ब्रा. ३।१०।८।६ ) इत्यादिवचांस्यपि योगविद्यामूलकानि । प्रजापतिकृततपश्चरणादि-विषयाः अपि योगीया एव । पञ्चविंश आत्मा भवति ( तै. ब्रा. १।२।६ ) इत्यादीनि तत्त्वप्रतिपादकवचांस्यपि सांख्यदृशैव व्याख्येयानि ।

उपनिषत्सु प्राचीनासु सांख्ययोगीया दृष्टिरतिस्पष्टरूपेणोपलभ्यते। आधु-निकोपनिषत्सु अर्वाचीना योगदृष्टिः, नवीनवेदान्तदृष्टिः, हठयोगादिदृष्टयश्च यथायथं दृश्यन्ते । काश्चिच्चोपनिषदः संप्रदायान्धदृष्टिभिरेव प्रणीता इति विज्ञेयम् ।

पूर्वे सांख्ययोगाचार्याः—परमर्षेः कपिलादनन्तरं योगभाष्यप्रणयनात् प्राग् ये आचार्या बभूवुः, तेषां कृत्स्नशो नामानि न ज्ञायन्ते, न वा ज्ञातुं शक्यन्ते । महाभारते[1] [2]सांख्यकारिकाटीकायामन्यत्र[3] च केचन प्रसिद्धाः सांख्ययोगाचार्याः स्मर्यन्ते । स्मृतानामाचार्याणामपि न वचनादीनि सर्वाणि, ग्रन्थाश्चोपलभ्यन्ते । इतिहासपुराणेषु पञ्चशिखादीनां यानि प्रवचनान्युपलभ्यन्ते न तानि तत्तदाचार्यप्रोक्तानि, प्रत्युत तत्तदाचार्यमतानुसारेण इतिहासपुराणा-प्रवक्तृभिः श्लोका विरचिता इत्येवाभ्युपेयम्। अत एव इतिहासपुराणाद्युपदिष्टानि आचार्यमतानि परीक्ष्यैव ग्राह्याणि । तदिदं भागवतविचारप्रसंगे प्राग्

---

१. शान्तिपर्वं ३१८।५६-६२

२. कारिका ( ६६-७०-७१ ) टोकाः—गौडपादभाष्य-माठरवृत्ति-जयमङ्गलाः, बुद्धचरितम् ( १२ अ० ) ।

३. सांख्यसूत्रे ( ६।६६ ) सनन्दननामास्ति । तथैव योगभाष्येऽपि जैगीष-व्यादीनां नामानि दृश्यन्ते । शारीरकभाष्ये च देवलनाम स्मृतम् ( १।४।२८ ) । भागवतीया सिद्धेशसूची ( ६।१५।१२-१५ ) ।

(पृ० १४-१५) दर्शितम्। यानि च मतानि द्रष्टृ-दृश्य-सत्कार्यवादविरुद्धानि, तानि खलु कृत्रिमाणि सांख्ययोगमतानीत्येव मन्तव्यम्।

आकरग्रन्थेभ्यश्च वक्ष्यमाणाः सांख्ययोगाचार्या ज्ञायन्ते। सांख्यकारिका-सांख्यसूत्र-तत्त्वसमास-योगसूत्रादीनां ये व्याख्याकाराः, तेषां नामानि नेह संकलितानि। ईश्वरकृष्णोऽपि योगभाष्यादर्वाचीन इत्यतस्तद्विषये न विचार्यते किमपि। विन्ध्यवासी खलु व्यासभाष्यात् प्राचीनोऽर्वाचीनो वा न निर्णीतमस्माभिः, तस्य नाम खल्वत्र संकलितम्।

इह प्रकरणे पौर्वापर्यक्रममनादृत्य आसुर्यादीनामाचार्याणां[1] विषये समासतो विचारः क्रियते। ते च—आसुरिः, सनन्दनः, पञ्चशिखः, जैगीषव्यः, असितः, आवट्यः, वार्षगण्यः, पराशरः, वसिष्ठः, याज्ञवल्क्यः, विन्ध्यवासी, जनकः, पतञ्जलिः, नारदः, उलूकः, देवलः, हारीतः, वाल्मीकिः, भृगुः, शुकः, गौतमः, गर्गः, आर्ष्टिषेणः, पुलस्त्यः, सनत्कुमारः, कश्यपः, अपान्तरतम इत्येवमादि।

येषां पुनरुपर्युक्तानामाचार्याणां वचनादिकमुपलभ्यते, विशिष्टमितिवृत्तं वा, तानधिकृत्येह किमपि विचार्यते।

अत्रेदमपि विज्ञेयं यत् सांख्ययोगविद्यैव योगाभ्यासानुरागविशेषतः, तत्त्वज्ञानविपर्ययतश्च बहुशाखा बभूव। अनुरागाधिक्याद् हठयोगादयो योगभेदाः, तत्त्वज्ञानविपर्ययाच्च शैववैष्णवादिसंप्रदायभेदा उत्पन्ना यथाकालम्, अत एतासां विद्यानामाचार्याः प्रवक्तारश्चापि संकीर्णसांख्ययोगाचार्या एव (यदि तेऽकपटहृदयाः साधनान्यनुतिष्ठेयुः)। एवं सत्यपि ते नासंकीर्णयोगविद इति कृत्वा सांख्ययोगाचार्याणामेव वचनादिकमत्र संगृह्यते।

**सांख्ययोगाचार्याः**—अथेह कपिलादीनाचार्यानधिकृत्य समासतः किमपि विवरणं प्रस्तूयते—

**कपिलः**—परमर्षिः कपिलः खलु निर्माणचित्तमधिष्ठायासुरये सांख्यतन्त्रं प्रोवाचेति प्रसिद्धिः। पुराणादिष्वपि परमर्षिचरितं तत्कृतसांख्यप्रवचनं चाभिहितम्। 'पुराणादिगतं सांख्यमतं न सर्वथा विशुद्धं भवतीति विज्ञेयम्।

कोऽयं कपिल इति[2] विचारणायां विशदोत्तरदानमतिदुरूहमेव। कर्दम-

---

१. आसुरि-पञ्चशिख-जैगीषव्यादिवचनान्याश्रित्य 'काललुप्ता सांख्ययोगविद्या'-नामकः कश्चिद् ग्रन्थोऽस्माभिः प्रणीयते, यत्र पूर्वाचार्यवचसां व्याख्यानमपि करिष्यते।

२. परमर्षिः खलु न कश्चिद् ऐतिहासिकः पुरुष इति केचन प्रतिपादयन्ति (द्र० Ancient Indian Historical Tradition, पृ० २७१, ३२६)।

देवहूतिपुत्रः कपिलो भागवतोक्त एव सांख्याचार्य इति माठरवृत्तिकारादयः। तन्नेति वयं मन्यामहे, यतो हि यदि नाम इदमितिवृत्तं परम्परासिद्धं स्यात्, तर्हि पुराणान्तरेष्वपि ( संप्रदायान्तरेष्वपि वा ) इदमनुस्मृतं स्यात्। न च कर्दमदेवहूतिविवाहादिकमन्यस्मिन् पुराणे स्मृतम्, अतः प्रतीयते भागवतकारेण स्वाभीष्टभक्तियोगप्रसिद्धये नवीनेयं कल्पना कृता। भागवतगतेष्वन्येष्वपि विषयेषु एतादृशं स्वातन्त्र्यपूर्वकवर्णनमुपलभ्यते येषु स्वाभीष्टदेवप्राधान्यादिकं प्रतिपादितमेव ग्रन्थकृता, अतः कपिलजन्मादि-विषये भागवतमतम् परीक्ष्यैव ग्राह्यम्। 'कपिलः सिद्धेशः कालविप्लुतं सांख्यम् आसुरये प्रोवाच'—इति भागवतीयं मतम् ( १।३।१० )। विचार्यतामिदं वाक्यम्। आदिविद्वान् तस्य प्रथमाय शिष्याय यदा विद्यामुपदिदेश—तदा सा विद्या कथं कालविप्लुता जाता ? पूर्वकल्पीयनाशमभिलक्ष्य काललुप्तता-कथनं खलु अप्रयोजकम्, अतः प्रतीयते भागवतकर्तुः सांख्यविषयिणी अज्ञता। यदा सांख्यज्ञानं काललुप्तमभवत्, तदनन्तरं केनापि विदुषा ज्ञानलोपसंवादं श्रुत्वा पूर्वापरसंबन्धमविगणय्येदं लिखितम्।

अपि च भागवतगतं सांख्यविद्यावर्णनं क्वचिद् अशुद्धमपि प्रतीयते ( पृ० १४-१५ ) इत्यतः सांख्यप्रवक्तुः कपिलस्य विषये भागवतवचो न सर्वांशतः सारभूतम्।

इतिहासपुराणेभ्यो ग्रन्थान्तरेभ्यश्च कपिलविषये यदुक्तं ततोऽवगम्यते परमर्षिर्हि सत्ययुगास्यान्तिमे भागे ( त्रेतायुगारम्भे वा ) सहजातधर्मज्ञान-वैराग्यैश्वर्यः प्रादुर्बभूव[1]। स च परमर्षिपदेनैव बहुत्राभिहितः ( मत्स्य० १४५।८२; शान्ति० ३४६।६५)।

कपिलः खलु सांख्यविद्याया वक्ता, न पुनः निश्चितशब्दानुपूर्वीयुतशास्त्रस्य प्रणेतेति। निर्माणचित्तयुताः पुरुषा न खलु परपक्षनिर्जयादि कर्तुमीहन्ते,

---

सेयं दृष्टिर्भारतीयैतिह्यविरुद्धा। सांख्ययोगातिरिक्तेष्वपि शास्त्रेषु सांख्यवक्ता कपिलः स्मर्यते, प्राचीना जैना बौद्धाश्च कपिले श्रद्धातिशयं प्रादर्शयन्नित्यतः नासौ काल्पनिको भवितुमर्हति।

१. भारतीयमैतिह्यमतिप्राचीनमतस्तत् प्रायेण अविस्पष्टमेव। कालगणनाऽपि न सर्वत्रैकरूपा दृश्यते, पौराणिकी युगगणना च न सुज्ञेया, अत एतादृशे स्वल्पे परिसरे नायं विषयो विशदीक्रियते, प्रमाणीक्रियते वा। ग्रन्थान्तरे स द्रष्टव्यः। युक्ति-दीपिकायां कपिलजन्मादिविषये विशिष्टं कथनमुपलभ्यते।

आगमप्रमाणबलेनैव ( द्र० १।७ योगभाष्यम् ) श्रोतारस्तत्र ज्ञानमधिगच्छन्ति। जल्पादियुतशास्त्रप्रणयनरूपक्लिष्टकार्येषु न योगसिद्धानां प्रवृत्तिर्भवतीति न्यायाच्च कपिलः खलूपदेष्टा मूलार्थानामिति मन्तव्यम् । सांख्यसूत्रनामा ग्रन्थः खलु प्राचीनतरसांख्योपदेशयुक्तः, बहुधोपबृंहितश्च यथाकालम् ; तत्त्वसमासोऽपि नातिप्राचीनो ग्रन्थः । कपिलोपदेशसिद्धपदार्थानाश्रित्य पञ्चशिखो ग्रन्थं प्रणिनाय । तत्र च पृथक्त्वेन षष्टिः पदार्था विवृता इति पाञ्चशिखग्रन्थस्य नाम षष्टितन्त्रमभूदित्यवगम्यते ।

इदमपि संभाव्यते यद् आदिविद्वत्कपिलानन्तरम् अन्येऽपि केचन सांख्ययोगसिद्धाः कपिलपदेनोच्यन्ते स्म । कपिलसंबद्धा बहवश्च घटनाः कपिलान्तरसंपर्कयुक्ता इत्यपि निश्चीयते । "अत्राप्युदाहरन्तीममितिहासं सनातनम्" इत्येतादृशी इतिहासपुराणभवोक्तिर्न सर्वथा सत्येतिवृत्तमाहेति स्वीकार्यमेव, अतः कपिलादीनामितिवृत्तं गुहाहितम् । वैदिकग्रन्थाः पुनः प्रोक्तपद्धत्या प्रणीता, अतो ग्रन्थगतवाक्यानां पौर्वापर्यनिर्धारणमपि दुःशकमेव । एवं सत्यपि परमर्षेः कपिलस्य सर्वदर्शनशास्त्रप्रवक्तृभ्यः प्राचीनता सिद्धैवेति **सांख्यविद्या-ग्रन्थे** द्रष्टव्यम् ।

**सांख्यतन्त्रस्वरूपम्**—यत् तन्त्रं परमर्षिणा प्रोक्तं, कीदृशं तदिति प्रश्न उदेति। पञ्चशिखप्रोक्त'द्विविद्वानि'त्यादिवाक्ये तन्त्रपदं प्रयुक्तम् , तन्त्रं नाम तन्त्र्यते व्युत्पाद्यतेऽनेनेति, अतः परमर्ष्युपदेशे सगुणनिर्गुणात्मज्ञानं व्युत्पादितं कार्यकारणतत्त्वमुखेनेति विज्ञायते । अत एव भागवते तत्त्वग्रामविनिर्णयमित्युक्तम् ( १।३।१० )। कारुण्यपदं ज्ञापयति यत् तत्त्वज्ञानेन सह तत्त्वोपलब्धिमार्गोऽपि भाषितः, न खलु तत्त्वस्वरूपं श्रुत्वैव कश्चिद् दुःखनाशाय समर्थः स्यादिति ।

पारमर्षं ज्ञानमीश्वरकृष्णो निर्वक्ति--"स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानामिति" ( ६६ का० ); चिन्त्यन्ते = व्यवस्थाप्यन्ते ( जयमङ्गला )। इदमेव तात्त्विकं मननं कार्यकारणानुसन्धानपूर्वकम्, एतादृशेन ज्ञानेनैव मोहनाशो भवति, न केवलया उपासनया। आहात्र आपस्तम्बः—"आत्मन् पश्यन् सर्वभूतानि न मुह्येच् चिन्तयन् कविः" ( १।२३।१ ) । अत्र चिन्तधातुः सार्थक एव ।

अनेन सांख्यज्ञानेन दुःखनिवृत्तिरपि भवितेत्यपि ज्ञानस्यास्य वैशिष्ट्यम् । तत्त्वस्वरूपेण सह उपलब्ध्युपायोऽपि कपिलेनोक्तः, अत एव देवल आह— "पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते । तत्त्वयाद् हृदि पश्यन्ति ब्रह्मभावे परां गतिम्" इति ( १८१।३८ ) । अत एव 'पुरुषार्थज्ञानमिदमि'ति सांख्यज्ञानविवरणावसर ईश्वरकृष्ण आह । दृष्टिरियं देवलेनापि प्रपञ्चिता ।

वस्तुतः सांख्येति पदं शुद्धं तात्त्विकं च ज्ञानम् अभिदधाति । यत्र ज्ञानं शुद्धम्, तत्र प्रमेयगता विशेषाः कृत्स्नशो विज्ञायन्ते, कति कियन्तो वेति। ततश्च यच्च शुद्धं कृत्स्नं तात्त्विकं ज्ञानं, तत् सर्वदा संख्यान्वितमेव स्यादिति कृत्वा सांख्यमिति पदस्य प्रवृत्तिरभवदिति विज्ञायते ( मत्स्य० ३।२६ ); अथवा सम्यगाख्यातमिति कृत्वा सांख्यमित्युच्यते । वस्तुतः सम्यग्दर्शनमिदम् इत्यतः ( शान्ति ३० ६।४५ ) सांख्यमुक्तमित्येव कथनं युक्तं प्रतिभाति । अथवेदमपि भवितुमर्हति यत् संख्या नाम प्रमाणसहगतं विभागपूर्वकं ज्ञानम् (द्र० शान्ति० ३२०।८२ ), एतादृशज्ञानविशिष्टमिदं शास्त्रमिति सांख्य-मित्युच्यते । उक्तं च "संख्यानं संख्या विवेकः तस्या इदं शास्त्रं सांख्यम् ( अर्थशास्त्रजयमङ्गला, पृ० १० )। आह च योगभाष्यकारः "एवं ग्रहीतृग्रहण-ग्राह्यस्वरूपचित्तभेदात् त्रयमप्येतज् जातितः प्रविभजन्त ते सम्यग्दर्शिन" इति (४।२३) । (द्र० शान्ति० ३०६।२६, २८, ३०, ४२-४३, ३०७।४५ चेति ) ।

आसुरिः—अयं खलु कपिलस्य प्रथमः शिष्य इति प्रागेवोक्तम् ( द्र० १।२५ व्यासभाष्यगतम् पञ्चशिखवाक्यं ) । 'आसुरिगोत्राय ब्राह्मणाये'त्युक्तम् गौडपादेन ( सां० का० १ ), अतो नेदमस्य नामेति विज्ञायते । माठरवृत्तौ (पृ. २ ) च तथैव दृश्यते । जयमङ्गलाटीकायां ( ७० का० ) वृत्तौ च वर्णितं यदयं महागृहस्थो यज्ञकारी चासीत्। ततश्च परमर्षित उपदेशं प्राप्य आत्मज्ञान-परायणो बभूवेति । आसुरिनामधेयस्य कस्यचिदृषेः यज्ञविषयकाणि बहूनि मतानि शतपथब्राह्मण उद्धृतानि । सांख्यविद् आसुरिरेवायमिति प्रतीयते; यतो हि आसुरिरपि यज्ञकारी प्रथमे वयस्यासीदिति । वैदिकर्षिनामसु आसुरे-र्नाम पठ्यते, याजुषवाङ्मये च स प्रसिद्धः । आसुरीयः कल्पोऽपि स्मर्यते ( वै. वा. इ. भाग १, पृ २८५ ) ।

भोगस्वरूपविषयकम् एकं मतम् "तथा चासुरिः" इत्युक्त्वा गुणरत्नसूरिणा उद्धृतम्—

विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।
प्रतिविम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥

श्लोकोऽयं व्योमवतीग्रन्थेऽपि ( पृ० ५२ ) उद्धृतः ।

सांख्यीयग्रन्थेषु नैतादृशं किमपि वाक्यम् उद्धृतम्, अतः संशयो भवति-कथं न खलु सूरिणा ज्ञातं यद् वाक्यमिदमासुरेरेवेति । आसुरिकृतं ग्रन्थादिकं वचनान्तराणि च नोपलभ्यन्ते । श्लोकदर्शितः सिद्धान्तस्तु सांख्यानुमत एव ।

मतमिदं बौद्धदार्शनिकेनाक्षिप्तम्—"उच्यते प्रतिविम्बस्य तादात्म्येन....." इति (तत्त्वसंग्रह २९८ का०)। आर्षमिदं मतमिति बौद्धा अपि अजानत। भोगः खलु बुद्धिकृत इति योगभाष्यतो गम्यते (१।२४, २।१९)। प्रतिविम्बोपमया भोगवर्णनमपि सांख्यदृष्टिसंगतमेव।

शान्तिपर्वणि (२१८।१३-१४) उक्तं यदासुरिर्ऋषीन् ब्रह्मतत्त्वमुपदिदेश। सांख्यज्ञानवतां किमपि मण्डलमपि समजनि तत्काल इत्यपि विज्ञायते (२१८।१४)।

पञ्चशिखः—अयमासुरिशिष्यः। महाभारत एतद्विषये बहुश उक्तम्, तथाहि–अयं कपिलायाः पुत्रः, आसुरेश्च शिष्य इति (शान्ति० २१८।६)। इदं संभाव्यते यदस्य प्रकृतं नाम अन्यदासीत्, पञ्चशिखेति नाम हेतुजातमिति। ते च हेतवः शान्तिपर्वणि विस्तरशः प्रोक्ताः (२१८।११-१२)। मिथिलाधिपं जनदेवजनकमयम् उपदिदेश (शान्ति० २१८।२२-२१९।५२)। जनकं प्रति जन्ममृत्युनिवृत्तिविषयेऽप्येतत्कृता उपदेशाः सन्ति (शान्ति० ३१९।६-१५)। जनक-वसिष्ठादिभ्यः पञ्चशिखेन सांख्यज्ञानं समाख्यातमिति युक्तिदीपिकायामप्युक्तम् (पृ० १७५)। शान्तिपर्वगतेष्वेषु स्थलेषु पञ्चशिखेन यत् प्रोक्तं तत् सांख्यविद्याया उपबृंहणभूतमेवेति प्रतीयते। मन्ये सांख्य-परम्परातः सांख्यविद्याप्रवचनं ज्ञात्वा भारतकारो विवरणमिदमुपनिबबन्ध। एतेषु श्लोकेषु यत् सांख्यज्ञानं प्रतिपादितं तदालोचनमन्यत्र कृतमस्माभिः[1]। पञ्चशिखविषये यदुक्तं भारते, ततस्तस्य प्रमाणभूतताऽपि ज्ञायते (शान्ति० २१८।७-९)।

पञ्चशिखविषय ईश्वरकृष्ण आह—'आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रमि'ति (७० का०)। कपिलप्रोक्तं यत् तन्त्रम् (तन्त्रस्वरूपम् प्राग् विवेचितम्) तत् तेन बहुधा कृतमित्यर्थः। कारिकाव्याख्यानत इदमवगम्यते यत् सांख्य-शास्त्रीयान् षष्टिं पदार्थान् आश्रित्य तेन प्रतिपदार्थविवरणपरो ग्रन्थः प्रणीतः, बहवश्च शिष्यास्तेनाध्यापिता इति। कपिलेन भगवता या विद्या समासतः प्रोक्ता, सैव विभज्य विशदीकृत्य विस्तरशश्च पञ्चशिखेन सुसंहतरूपेण युक्तित उपनिबद्धा ग्रन्थरूपेण, प्रचारिता चेति व्यक्तं प्रतीयते। कपिलः खलु स्वपक्षस्थापनपरपक्षनिर्जयात्मकं शास्त्रं न जग्रन्थ, पञ्चशिखस्तु शास्त्रं प्रणीतवानिति। पृथक्शः विचारकरणात् षष्टिखण्डात्मकं तत् शास्त्रमभवदित्यपि

---

१. द्र० 'कालुप्ता सांख्ययोगविद्या'-नामको ग्रन्थः।

प्रतीयते, ततश्च षष्टितन्त्रेति नवीनं नाम प्रसिद्धमभवत्। कपिलप्रवचन एते पदार्थाः संपिण्डितरूपेणासन्निति विज्ञायते।

धर्मध्वजजनक-कालिकोऽयं पञ्चशिखः, अत इक्ष्वाकुवंशीयस्यास्य राज्ञः स्थितिकालो यदि निश्चितो भवेत् तर्हि पञ्चशिखस्य कालोऽपि विज्ञातो भवेदिति। या च भाषाशैली पञ्चशिखस्य दृश्यते ततोऽपि प्रतीयते—प्रचलितेभ्यः सर्वेभ्यो दर्शनशास्त्रेभ्यः प्राचीनतमः खलु पाञ्चशिखः सूत्रग्रन्थ इति। दार्शनिक-पारिभाषिकशब्दनिर्माणात् प्राक् तेन ग्रन्थो व्यरचि। २।६ भाष्य आकारशील-विद्यादिशब्दास्तेन विशुद्धयाद्यर्थे प्रयुक्ताः, तत इदं विज्ञायते। न खलु दार्शनिप्रस्थानेषु क्वचिदप्याकारशीलादयः शब्दा एष्वर्थेषु प्रयुक्ताः।

इदमनुमीयते यत् सांख्यकारिकायाः सांख्यसूत्रस्य च मूलं पञ्चशिखकृतं षष्टितन्त्रमेव। यद्येवं स्यात्, तर्हि सांख्यकारिकासांख्यसूत्रगता मूलभूता विषया एतद्ग्रन्थे बीजरूपेणासन्निति स्वीकरणीयम्।

पञ्चशिखकृतो ग्रन्थो नेदानीं प्रचलति, अतस्तस्य स्वरूपं न कृत्स्नतो विज्ञायते। अस्माकं धन्यतया बहूनि पञ्चशिखवाक्यानि लभ्यन्ते व्यासभाष्यादिषु ग्रन्थेषूद्धृतानि। एभ्य इदं प्रतीयते यदयं ग्रन्थः सूत्रमयः श्लोकमयश्चासीदिति। योगभाष्यस्य च ग्रन्थोऽयमुपजीव्यभूत इति व्यक्तमेव प्रतीयते। युक्तिबलेन गुण-पुरुष-संयोगादीनां तत्त्वं तत्र विवृतमासीदित्यपि विज्ञायते। सूक्ष्मप्रमेयोलब्धिसाधनान्यनुमानविचारो मैत्र्यादिभावनाः, अहिंसादिसाधनान्यपि तत्र कथितानि।

पञ्चशिखवचनानि बहुषु ग्रन्थेषूद्धृतानि। ते च—गौडपादकृत-सांख्यकारिकाटीका ( १७ का० ), माठरवृत्तिः ( १७ का० ), ललितासहस्रनामभाष्यम् ( पृ० १०५ ), योगवार्त्तिकम्, सांख्यसूत्र-विज्ञानभिक्षुभाष्यम्, युक्तिदीपिका च। इदं प्रतीयते यत् 'तथा चोक्तम्' इत्येतादृशैर्वचनैर्यानि वचनानि सांख्यग्रन्थेषूद्धृतानि, तेष्वपि कानिचन वचनानि पाञ्चशिखीयानीति[1]।

**वार्षगण्यः**—३।५३ योगभाष्ये वार्षगण्यस्यैकं वचनमुद्धृतम् ( मूर्तिव्यवधीत्यादि )। ४।१३ भाष्ये 'गुणानाम्' इत्यादिकः श्लोकोऽपि वार्षगण्यकृत इति तत्त्ववैशारदी-भामती( २।१।३ )-पर्यालोचनतो ज्ञायते। महाभाष्य-

---

१. उद्धरणविषये समस्याश्च बहवो दृश्यन्ते। समासतो विचारितोऽयं विषयो हिन्दीभाषायां मया ( द्र० 'कल्पना' अगस्त १९५९ अङ्कः )

प्रदीपेऽपि श्लोकस्यास्य पूर्वार्धं उद्धृतः (४।१।२)। इदं प्रतीयते यद् वार्षगण्यः षष्टितन्त्रप्रवचनभूतं किमपि शास्त्रं रचयामास। अन्यत्रापि योगभाष्ये (वार्षगण्यनामाभावेऽपि) वार्षगण्यमतमुदाहृतम्। तथाहि—३।१३ भाष्ये 'तदेतद्' इत्यादिर्यः सन्दर्भो विद्यते, स वार्षगणानां मतमिति युक्तिदीपिकाकारः, (पृ० ६७)। वार्षगणानां यानि मतानि युक्तिदीपिकायां संगृहीतानि, तेषां सादृश्यं (शब्दतोऽर्थतश्च) व्यास-भाष्ये दृश्यते। वार्षगणमत-मूलभूताचार्यः खलु वार्षगण्य एव; यतोहि वार्षगणा वार्षगण्यशिष्या एवेति। २।१५, ३।१३ भाष्यधृतं रूपातिशयेत्यादिवाक्यमपि अस्याचार्यस्यैवेति युक्तिदीपिकातो ज्ञायते (पृ. ७२), इदं पञ्चशिखवाक्यमित्यन्ये। पञ्चशिखोक्तशास्त्रमाश्रित्यैव वार्षगण्यः स्वशास्त्रं प्रोक्तवानतः पाञ्चशिखीयानुपूर्वी तद्ग्रन्थेऽवलोक्यत इत्येवात्र वचनीयम्। 'प्रोक्त'-रीत्या ये ग्रन्था रचितास्तेषु सर्वेषु इत्थमेव दृश्यते।

न्यायवार्त्तिकतात्पर्यटीकायां (१।१।४) वार्षगण्यकृतं प्रत्यक्षलक्षणं स्मृतम्। षष्टितन्त्रे प्रमाणचर्चा पुष्कलाऽऽसीदिति विज्ञायते, अतः तद्भवेषु ग्रन्थेष्वपीयं चर्चाऽऽरब्धा। मननार्थं सांख्यविद्येतिकृत्वा प्रमाणचर्चाऽत्रावश्यंभावीति विज्ञेयम्।

वार्षगण्यः खलु सामशाखाप्रवक्ता (वै. वा. इ. भाग १, पृ. ३२०)। शान्तिपर्वणि (३१८।५६) आचार्योऽयं स्मृतः सांख्याचार्यरूपेण। वार्षगण्यविषये O. D. S. S. T. (पृ० १३५-१४१), सा० द० इ० (पृ० ५०६-५१२) ग्रन्थश्च द्रष्टव्यः।

हारीत :—अस्यैकं वचनम् (अहिंसा नाम सर्वभूतेषु अनभिद्रोहः) योगभाष्येऽनुक्तम् (२।३०)। कृत्यकल्पतरु-मोक्षकाण्डे (वानप्रस्थ-यतिधर्मप्रसङ्गे) बहूनि हारीतवचनान्युद्धृतानि (पृ० २२, २६, ४२, ५२, ५३, ६०, ८१, ८२, १७४)। कृत्यकल्पतरुकार आह—"सांख्ययोगयोर्भिन्नोर्ब्रह्मलयेच्छाप्राप्तिवचनान्तरं हारीत" इति (पृ० ४२), एतेन प्रतीयते यद् ग्रन्थकारो हारीतग्रन्थं ददर्शेति, यद् वा परम्परायां हारीतकृतिरशंतः सुरक्षितासीदिति। भिक्षुचर्या सांख्ययोगानुसारिणी प्रोक्तात्रेति दृश्यते (पृ० ५३)। योगसूत्रे यो वितर्कप्रसङ्गोऽस्ति (२।३३-३४), सोऽप्यत्र विचारितः (पृ० ८२)। धारणाऽपि विशदीकृता-'मनसोऽधारणमन्तःशरीरे हृदि ललाटे परं ब्रह्मात्मज्योतिरादित्यमहीनभःसु जलभाजनवत् मनसस्त्वेकधारणाद् धारणा" (पृ० १७४) इति।

महाभारते ( शान्ति० २७८ अ० ) हारीतमतं वर्णितम्, तच्च सर्वथा सांख्ययोगानुसारीति दृश्यते। मोक्षयानशब्दो हारीतेन प्रयुक्तः ( २७८। २१ ), मन्ये बौद्धसम्प्रदायप्रसिद्धौ हीनयानमहायानशब्दावेतदनुकरणपराविति।[१]

जैगीषव्यः—अयमतिप्रसिद्धः सांख्ययोगाचार्यः। बहुषु पुराणेषु योगिश्रेष्ठरूपेण शैवयोगिरूपेण चायं स्मृतः[२]। महाभारतेऽपि बहुधोल्लिखितोऽयम्। आदित्यतीर्थमहिमप्रसङ्गेऽस्य चरितं शल्यपर्वण्युक्तम् ( ५० अ० )। असितदेवलं प्रति समत्वबुद्धिविषयकोऽस्योपदेशः शान्तिपर्वणि दृश्यते ( २२९।७-२५ )। आवट्यं प्रत्यस्य पूर्वजन्मानुभवकैवल्यसुखविषयक उपदेशो योगभाष्ये ( ३।१८ ) विद्यते। शिवमहिमविषयकोऽस्यानुभवोऽनुशासनपर्वणि ( १८।३७ ) विवृतः।

प्रत्याहारविषयकमेकमस्य वचनं योगभाष्ये ( २।५५ ) दृश्यते। धारणाविषयकं किमपि शास्त्रमयम् उपनिबबन्धेति ज्ञायते[३] ( न्या. वा. ता. टी. ३।२ ४२ )। अग्निपुराणेऽस्य मतमुद्धृतम्—

"कर्तव्यमिति यत्कर्म ऋग्यजुःसामसंज्ञितम्।
कुरुते श्रेयसेऽसंगाज्जैगीषव्येन गीयते" ॥ इति ( ३८२।८ )

बहुषु हठयोगादिग्रन्थेषु[४] आचार्योऽयं स्मृतः। आह च शाक्तो भास्करराय:—"जैगीषव्यादयः शिवयोगित्वेन ये व्यवह्रियन्ते", इति ( भावनोपनिषद्व्याख्या ३४ ), अतो गम्यते संप्रदायान्तरेष्वप्यस्य प्रसिद्धिरासीदिति।

---

१. बौद्धशब्दार्थबहुलः प्रसङ्गो महाभारते क्वचिद् दृश्यते—'अविद्या कर्मतृष्णा च केचिदाहुः पुनर्भवे, कारणं दोषमोहौ तु शेषाणां तु निषेवणम्' इति ( द्र० शान्ति० २१८।३२, ३३-३४ अपि )। नैतादृशानि स्थलानि बुद्धतः परभवाणीति मन्तव्यम्, इदमेव ज्ञानं संकोर्णरूपेण बौद्धैः प्रचारितमित्येव।

२. लिङ्ग १।९२।५२-५३, वायु० २३।१३८; ७२।१८, मत्स्य० १८०।५७-५८, काशीखण्डः ६३ अ०; कुमारिकाखण्डः १२।१५२; कूर्म० १।४८ अ०; लिङ्ग० १।७।३१ अन्यत्र च।

३. धारणाविषये पुराणादिषु योगग्रन्थेषु बौद्धादिशास्त्रेषु च यद् विवरणमस्ति, तदाश्रित्य 'धारणासूत्रम्' इति नामधेयो ग्रन्थोऽस्माभिः प्रणीतः।

४. द्र० हठयोगप्रदीपिकाज्योत्स्नाटीका (पृ० १७५ अड्यार संस्क०), शिवानन्दसरस्वतीकृत-योगचिन्तामणिः (पृ. १७६, १८६), बुद्धचरितकाव्यं (१२।६७) च।

याज्ञवल्क्यः—अयं सांख्ययोगाचार्य इति शान्तिपर्वतो ज्ञायते। विदेहराजं जनकं प्रत्यनेन यदुपदिष्टं तदत्र ( ३१०—३१८ अ० ) विद्यते । एष्वध्यायेषु सांख्ययोगविद्या न्यायबहुला प्रोक्ता । बृहदारण्यकेऽपि याज्ञवल्क्य-दृष्टिस्तर्क-प्रधानेति शंकर आह—"तर्कप्रधानं याज्ञवल्कीयं काण्डमिति" (बृहदा० भाष्य ४।५।१; ३।१।१ अपि द्र०)।अयमेव विश्वामित्रस्य ब्रह्मवादी पुत्र इति केचित् । व्यासभाष्ये याज्ञवल्क्यप्रकरणगतश्लोकानां छाया क्वचिद् दृश्यते । क्वचिच्च दृष्टि-भेदमाश्रित्य नवीनाः पारिभाषिकाः शब्दाः कृताः, यथा 'सविशेषेति' शब्दः ( ३१०।१४ )।

अयं याज्ञवल्क्य एव शतपथकार इति शान्तिपर्वतो विज्ञायते (३१८।११)। अनेनैव याज्ञवल्क्यस्मृतिरपि प्रणीतेति प्रसिद्धिः । याज्ञवल्क्योपदेशं गृहीत्वा केनचिदियं स्मृतिः प्रणीतेति कथनमेव युक्तिसहम् , स्मृतिगतमात्मज्ञानवर्णनं सर्वथा सांख्ययोगाश्रितमिति दृश्यते । योगियाज्ञवल्क्यग्रन्थोऽप्येतत्संबद्ध एव। स च ग्रन्थः पातञ्जलाश्रितो, यतोऽत्र प्राणायामविवरणम् ( ८।१६–२१ ) ईश्वरलक्षणं ( २।४३–४४ ) च पातञ्जलानुसारि । ब्रह्मोक्तयाज्ञवल्क्यसंहिता-नामकोऽपि ग्रन्थो विद्यते, बृहद्योगियाज्ञवल्क्यग्रन्थोऽपि क्वचन श्रूयते । कूर्मपुराणे याज्ञवल्क्यकृतयोगशास्त्रं स्मृतम् ( १।२५।४४ ) ।

योगीश्वरं याज्ञवल्क्यमधिकृत्य पुराणे बहूक्तम् । याज्ञवल्क्यः खलु इक्ष्वाकु-वंशीय–हिरण्यनाभतो योगविद्यां प्राप्तवानिति ( विष्णु० ४।४।८ )। भागवतेऽपि ( ६।१२।३–४ ) इत्थमेव दृश्यते । ब्रह्माण्डपुराणेऽपि ( २।६३।२०७–२०८ ) घटनेयं स्मृता । हिरण्यनाभोऽयं सामशाखाकारः, कोसलदेशीयश्च । यदि इक्ष्वाकु–कालो निर्णीतः स्यात्, तर्हि याज्ञवल्क्य-कालोऽपि निर्णीतो भवेत्।

वसिष्ठः—अस्मै पञ्चशिखः सांख्यज्ञानमाचख्य इति युक्तिदीपिकायामुक्तम् ( पृ० १७४ ) । वसिष्ठो विदेहराजं करालजनकमुपदिष्टवानिति शान्ति-पर्वण्युक्तम् ( ३०२–३०६ अ० ) । अत्र सांख्ययोग–विद्याया एव वर्णनं दृश्यते । कोऽयं वसिष्ठ इति न ज्ञायते । पराशरपितामह एवायमिति कथयितुं शक्यते । वसिष्ठप्रोक्तं धर्मसूत्रं प्रचलति, तच्च सांख्ययोगाविरोधीति दृश्यते । एतत्प्रोक्तं साधनं सर्वथा सांख्ययोगानुमोदितम् । यतीनां कृते सर्वभूताभय-प्रदानं साधनत्वेनात्रोक्तम् ( १० अ० ) । तदिदं साधनं योगभाष्येऽपि (२।३३) स्वीकृतम्। अयं हिरण्यगर्भतो योगमाप्तवानिति (शान्ति० ३०८।४५)।

भृगुः—ब्रह्माण्डोत्पत्तिविषयक एतत्कृत उपदेशो दृश्यते शान्तिपर्वणि ( १८२ अ० ) । उपदेशोऽयं सर्वथा सांख्यानुगत एव ।

**पराशरः**—जनकं प्रति पराशरोपदेशः सांख्यशास्त्रीयो महाभारते दृश्यते ( शान्ति० २६० अ० )। अयं शिवस्य भगवतो भक्त इत्युक्तं महाभारते ( अनुशासन० १८।४०–४५ ) । गणकतरङ्गिण्यामेकं वचनमस्ति, येन ज्ञायते यत् किमप्यध्यात्मशास्त्रं पराशरो जग्रन्थेति—"तथा चाह पराशरः—

मैत्रेयाय मयाऽप्युक्तं गुह्यमध्यात्मसंज्ञितम् ।
शास्त्रमाद्यं तदेवेह लोके यच्चातिदुर्लभम्" ॥ इति ( ग्रन्थारम्भे ) ।

कोऽयं ग्रन्थ इति स्पष्टं न ज्ञायते । अयं 'वृद्ध' इति विशेषणेन विशेषितो बुद्धचरिते ( १२ अ० ) । अनेनास्य दीर्घजीविता सूचिता भवति । पराशरसगोत्रीयः किल पञ्चशिख इति शान्तिपर्वणि ( ३२०।२४ ) दृश्यते । पराशरविषयकमितिवृत्तं सर्वथाऽनिर्णीतमेव ।

**सनकादयः**—सनक-सनातन-सनन्दन-सनत्कुमारा अपि सांख्ययोगिन आसन्निति इतिहासपुराणतः सांख्ययोगग्रन्थतश्च ज्ञायते । सांख्यसूत्रे ( ६।६९ ) सनन्दनमतमुक्तम् । सनकमतमग्निपुराणे ( ३८२।१० ) दृश्यते। अत्र ( ३८२। ३–१० ) कपिल–पञ्चशिख-देवलादीनामपि मतान्युक्तानि । कुल्लूकोऽपि सनकवचनमुदाजहार ( मनु० १।५६ टीका ) । वोढुनामकस्याचार्यस्यापि वचनादिकं न क्वापि लभ्यते । स्मर्यते च तन्नाम कपिलादिभिः सह पुराणेषु ।

**देवलः**—अयं सांख्यविद् धर्मसूत्रकार इति शंकरोऽपि बभाषे—"देवलप्रभृतिभिश्च कैश्चिद् धर्मसूत्रकारैः....." ( १।४।२८ ) इति । एतेन प्रतीयते यत् हारीत-गौतमापस्तम्बादयो धर्मसूत्रकाराः सांख्ययोगप्रवक्तार आसन् इति । एतेषां धर्मसूत्रकाराणां विरुद्धाचरणं कृत्वा शंकरः स्वसिद्धान्तस्य अवैदिकत्वमेव ख्यापयति। देवलादयः शंकरापेक्षया योगविद्वत्तमा वेदवित्तमाश्च। अतः शंकरकृतदेवलादिमतखण्डनं वैयात्यप्ररोचितमेवेति मन्तव्यम् । देवलप्रशंसा गीतायामपि ( १०।१३ ) दृश्यते ।

कोऽयं देवल इति विचार्यो विषयः । प्रत्यूषवसुपुत्रो देवलः श्रूयते, अपरश्च धौम्याग्रजः । नात्रैतद्विचारस्य प्रयोजनम् ।

देवलस्य बहूनि सांख्ययोगप्रतिपादकानि वचनानि कृत्यकल्पतरुमोक्षकाण्डे स्मृतानि ( पृ० २१, ४६ ५०, ५६, १००–१०१, १०६, १२४, १६५, १६८, १७०, १७३, १७४, १८१, २१२, २१६ ) । तथैवापरार्कटीकायामपि एतन्मतम् दृश्यते ( याज्ञ० प्रायश्चित्ताध्याय श्लो० १०९ ) । योगभाष्य एतद्वचनच्छायावलोक्यते ।

देवलवचांसि सांख्ययोगप्रतिपादकानीति दृश्यन्ते। तत्त्वसमाससूत्रवत् कथनमत्र दृश्यते। प्रागपि सांख्ययोगप्रतिपादकानि विशालानि गम्भीराणि तन्त्राण्यासन्निति कथितम्। दशमूलिकार्थप्रतिपादकः श्लोकः ( अस्तित्वमेकत्वम्··· ) अत्रास्ति। भूतादयः, तेषां सृष्टिक्रमश्चापि कथितः। वैराग्याभ्यासो बन्धः, पुरुषार्थौ, दीक्षितकृत्यं, भिक्षुचर्या, प्राणायामादिसाधनानि उद्घातलक्षणं ( प्राणापानव्यानोदानसमानानां सकृदुद्गमनं मूर्धानमाहत्य निवृत्तिश्चोद्घातः ), प्रत्याहार-धारणा-ध्यान-लक्षणानि, विभूतय, इत्येते विषया देवलवचने विवृताः। दुःखात्यन्ताभाव एवापवर्ग इति देवलमतमासीदिति विज्ञायते। ( मोक्षकाण्डे पृ० ७ )। द्रष्टुः स्वरूपावस्थानं यद्यपि सत्त्वादिगुणहीनं, तथापि तत् परमसुखेति पदेनापि देवल उक्तवान् ( पृ० ७ ), नेदं सुखं बौद्धप्रत्ययविशेषात्मकं, विपर्यस्तदृष्टिभिः पुनः सुखात्मको मोक्ष इत्यभ्युगम्यते। गुणसंबन्धाभावान्न तत्र सुखलेशोऽपि।

**असितः**—देवलेन सहास्यापि नाम प्रायेण स्मर्यते। शिवमहिमविषयकोऽस्यानुभवोऽनुशासनपर्वण्युक्तम् ( १८।१७–१८ )। गीतायामयं स्मृतः ( १०। १३ )। अयं देवलस्य पिता। नारदकृतसृष्टिविषयकप्रश्ना अनेन समाहिताः ( शान्ति० २७५।४–३६ )। समाधानमिदं सांख्यानुसारीति। दृष्टिभेदमाश्रित्या नेनाष्टौ ज्ञानेन्द्रियाणीत्युक्तम् ( २७५।१८ )।

**नारदः**—वसिष्ठोक्ता सांख्ययोगविद्या नारदतो भीष्मेण प्राप्तेत्युक्तं शान्तिपर्वणि ( ३०८।४४ ), अतोऽस्य योगविद्यावेत्तृत्वे संशय एव नास्ति। नारदप्रोक्ता उपदेशा ये भारतादिषूपलभ्यन्ते, ततोऽस्य योगविद्याचार्यत्वं सिद्ध्यति। शुकदेवं प्रति ज्ञान-वैराग्यप्रतिपादका एतदुपदेशाः सर्वथा योगानुसारिण एव ( शान्ति० ३२६–३३१ अ० )।

**जनकः**—जनकवंशीया राजान आत्मज्ञानोपासकाः प्रायेणासन्नित्युक्तम् ( विष्णु० ४।५।१४ )। योगाचार्यरूपेण नैषां प्रसिद्धिरपि तु योगानुशासनाभ्यासिरूपेणैव। केचन जनकवंशीयाश्च आत्मज्ञानिनोऽभूवन्निति महाभारताद् विज्ञायते। क्वचिच्च जनककर्तृकाः सांख्ययोगविषयका उपदेशा अपि महाभारते संकलिताः, यथा—माण्डव्यं प्रति जनकोपदेशः ( शान्ति० २७६ अ० ), शुकं प्रति जनकोपदेशश्च ( शान्ति० ३२६।२२–५१ )। जनकः पञ्चशिखाद् ज्ञानं प्राप इति युक्तिदीपिकातोऽवगम्यते ( पृ० १७५ )। जनदेव-धर्मध्वज-करालादयो जनकवंशीयाः पञ्चशिखादिभिराचार्यैरुपदिष्टा इति विज्ञायते ( द्र० शान्तिपर्व ) विष्णुपुराणेऽपि केशिध्वज-खाण्डिक्यजनकसंवादोऽस्ति ( ६।६–७ अ० )। अत्रत्यं ज्ञानमपि सांख्ययोगानुगतमेव, अतो ज्ञानप्रवक्ता

केशिध्वजः सांख्ययोगाचार्य इत्येवाभ्युपेयम् । अत्रोक्तः श्लोकः ( ६।६।२ ) योगदर्शनेऽपि ईषत्पाठभेदेन सह्योद्धृतो दृश्यते ( १।२८ )। अष्टाङ्गयोगोऽत्र विवृतः । सनन्दनादयो ब्रह्मभावनायुता आसन्नित्यत्रोक्तम् ( ६।७।५० ) ।

वाल्मीकिः—किं रामचरितकारोऽयमिति विचार्यो विषयः । कश्चिद् वाल्मीकिः शिवविषये स्वानुभवं कथयामास युधिष्ठिरायेति श्रूयते ( अनुशासन० १८।८-१० ) । रामायणकृद् ऋक्षो वाल्मीकिः खलु भृगुवंशीय इति पुराणेषूक्तम्, अतो भृगूपदिष्टा सांख्यविद्याऽनेनाधिगतेति प्रतीयते ।

व्यासो द्वैपायनः—अयमपि सांख्ययोगाचार्यः, अत एव स 'भृगुवाक्यप्रवर्ती'त्युच्यते। ( वायु० १।४२ ), भृगुश्च सांख्ययोगाचार्य इति । शुकं प्रति अनेन बहुधा यदुपदिष्टं ( शान्ति० २३१—२५४ अ० ) तत्र सांख्यज्ञानमेवावलोक्यते, पातञ्जलयोगविवरणं च। अतिसारवदिदं विवरणम्। कठाद्युपनिषत्प्रोक्तज्ञानमत्र बहुधा विवृतम् । अत्र ज्ञानयोगमार्गचिन्ता वर्तते ।

विन्ध्यवासी—योगभाष्ये यस्तप्यतापकभावविवरणमास्ते ( २।१७ ), तत्प्रवक्तृषु अन्यतमो विन्ध्यवासीति प्रतीयते ( द्र० भोजवृत्तिः ४।२२ ) । कोऽयं विन्ध्यवासीति न ज्ञायते; पदमिदं नाम वा, विन्ध्यवासकारिणि मुनिविशेषे प्रयुक्तमिति वा चिन्तनीयम् । तत्त्ववैशारद्यां वाचस्पतिः रसायनोपयोगविभूत्युदाहरणप्रङ्ग आह-"यथा माण्डव्यो मुनी रसोपयोगाद् विन्ध्यवासीति" (४।१)। इदं भवितुमर्हति यद् रसप्रयोगकुशलो माण्डव्य एवायं सांख्याचार्यः। नागार्जुनः रसरत्नाकरग्रन्थे रसाचार्यौ वसिष्ठमाण्डव्यौ स्मरति स्म । माण्डव्यविषयिका काचिद् घटना कौटलीयेऽर्थशास्त्रे स्मर्यते ( ४।८ ) । कमलशीलेन सत्कार्यवादविषयकं विन्ध्यवासिमतमाक्षिप्तम् ( तत्त्वसंग्रह० पृ० २२ )। तदिदं दोषप्रदर्शनं मुधैवेति वाचस्पतिर्दर्शितवान् ( ३।१३ तत्त्ववै० ) ।

विन्ध्यवासिनो भूयांसि मतानि युक्तिदीपिकायाम् (पृ० ४, १०८, १४४ ), श्लोकवार्त्तिके ( पञ्चमसूत्रस्योपरि ), गुणरत्नसूरिकृत–षड्दर्शनसमुच्चयव्याख्यायाम् (पृ० १०४ ); स्याद्वादमञ्जरी टीकायाम् १५ श्लो०, तत्त्वसंग्रह-पञ्जिकायाम् (पृ० २२, ४२३, ६३६ ), अभयदेवसूरिकृतसन्मतितर्कव्याख्यायाम् ( पृ० ५३३ ), मेधातिथिभाष्ये ( १।५५ ), अन्यत्रापि दृश्यन्ते ( द्र० सां० द० इ० यथास्थानम् ) ।

उलूक-गौतमापान्तरतमादयो य आचार्याः प्रागभिहिताः, सांख्ययोगविषये तेषां विशिष्टं वचनं ग्रन्थादिकं वा नोपलभ्यते, यद्यपि योगिरूपेण तेषा मुल्लेखस्तु पुराणादिषु दृश्यत एव । ग्रन्थान्तरे गौतमाद्याचार्यविषये विचारयिष्यामः ॥

शास्त्रयुक्तिसमाकीर्णा भूमिकेयं भगो बुधाः ।
गृह्यतां हृदयेनैषा खण्ड्यतां वा सुयुक्तितः ॥ १ ॥
'अब्रुवन् विब्रुवन् वापि नरो भवति किल्विषी' ।
मनूक्तिरेषा विज्ञेया कार्याकार्यविचारणे ॥ २ ॥
सदर्थस्यासदर्थस्य धारणे च विसर्जने ।
बद्धादरो जीवकोऽयं रामशंकर-नामकः ॥ ३ ॥
यस्य पितामहो राजारामः पशुपतिः पिता ।
वीणापाणिश्च जननी सोऽस्य ग्रन्थस्य लेखकः ॥ ४ ॥

इति श्रीकापिलमठाचार्य-( मधुपुर, बिहार ) लब्धयोगविद्येन,
वेद-पुराण-दर्शन-शब्द-विद्यानुसन्धान-परायणेन,
श्रीरामशंकरभट्टाचार्येण रचिता
भूमिका समाप्ता ।

श्रीगणेशाय नमः ।

# पातञ्जलयोगसूत्रम्

## वाचस्पतिकृतटीकायुतव्यासभाष्यसमेतम् ।

### तत्र समाधिपादः प्रथमः ।

[1]यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधानुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात्सितविमलतनुर्योगदो योगयुक्तः ॥ १ ॥

अथ योगानुशासनम् ॥ १ ॥

अथेत्ययमधिकारार्थः ।

---

नमामि जगदुत्पत्तिहेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय च ॥ १ ॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधीयते ॥ २ ॥

इह हि भगवान्पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस्तात्पर्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं श्रोतुश्च सुखावबोधार्थमाचिख्यासुरादाविदं सूत्रं रचयाञ्चकार—**अथ योगानुशासनम्** । तत्र प्रथमावयवमथशब्दं व्याचष्टे—**अथेत्ययमधिकारार्थः** । 'अथैष ज्योति'रितिवत् न त्वानन्तर्यार्थः । **अनुशासनमिति** हि शास्त्रमाह–अनुशिष्यतेऽनेनेति व्युत्पत्त्या। न चास्य शमदमाद्यनन्तरं प्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषानन्तरम् । जिज्ञासाज्ञानयोस्तु स्यात् । यथाम्नायते—तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत् ( बृ. ४।४।२३ ) इति । शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्यस्य च संभवेऽपि नाभिधानम् । शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्प्रामाणिकत्वे योगानुशासनस्य तद-

---

१. श्लोकोऽयं प्रक्षिप्त इति भूमिकायामुपपादितम् ।

योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् । योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्मः । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति

---

भावेऽप्युपेयत्वादप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात् । एतेन तत्त्वज्ञानचिख्यापयिषयोरानन्तर्याभिधानं परास्तम् । अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य योगस्याभिधानात्सकलशास्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्तितश्च भवतीति । निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम् । ननु किं सर्वसंदर्भगतोऽथशब्दोऽधिकारार्थः, तथा स'त्यथातो ब्रह्मजिज्ञासा' ( ब्र. सू. १।१।१ ) इत्यादावपि प्रसङ्ग इत्यत आह–**अयमिति** । ननु—"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर्योगशास्त्रकर्तृत्वमित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तम् । शिष्टस्यानुशासनं नतु शासनमित्यर्थः । यदायमथशब्दोऽधिकारार्थस्तदैष वाक्यार्थः संपद्यत इत्याह—**योगानुशासनं शास्त्रमधिकृतमिति** । ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रमित्यत आह—**वेदितव्यमिति** ।सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः । स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः । करणगोचरश्च व्युत्पादकस्य व्यापारो न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम् । शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः । अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायापि कल्पत इति मन्तव्यम् । शब्दसंदेहनिमित्तमर्थसंदेहमपनयति—**योगः समाधिरिति** । युज समाधौ ( धा. पा. ४।६७ ) इत्यस्माद्व्युत्पन्नः समाध्यर्थो न तु युजिर् योगे (धा. पा. ७।७) इत्यस्मात्संयोगार्थ इत्यर्थः । ननु समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम् । न चाङ्गमेवाङ्गीत्यत आह—**स च सार्वभौमः** । चस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति । भूमयोऽवस्था वक्ष्यमाणा मधुमती-मधुप्रतीका-विशोका–संस्कारशेषास्ताश्चित्तस्य। तासु सर्वासु विदितः सार्वभौमश्चित्तवृत्तिनिरोधलक्षणो योगः । तदङ्गं तु समाधिर्नैवंभूतः । व्युत्पत्तिनिमित्तमात्राभिधानं चैतद्योगः समाधिरिति । अङ्गाङ्गिनोरभेदविवक्षामात्रेण प्रवृत्तिनिमित्तं योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः । वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यन्ति तन्निरासायाह—**चित्तस्य धर्म इति** । चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति । न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति बुद्धिस्तु भवेदिति भावः । स्यादेतत्—सार्वभौमश्चेद्योगो हन्त भोः क्षिप्तमूढविक्षिप्ता अपि चित्तभूमयः। अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगत्वप्रसङ्ग इत्याशङ्क्य हेयोपादेयभूमीरुपन्यस्यति—**क्षिप्तमित्यादि** ।

चित्तस्य भूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते। यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखं करोति स संप्रज्ञातो योग इत्याख्यायते। स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इत्युपरिष्टात्प्रवेदयिष्यामः। सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः॥ १॥

---

क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम्। मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमत्। क्षिप्ताद्विशिष्टं विक्षिप्तम्। विशेषो स्थेमबहुलस्य कादाचित्कः स्थेमा। सा चास्यास्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रमेकतानम्। निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्। तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुभावाभावात्तद्रूपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्। विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योगत्वमिति निषेधति। तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूतविषयश्चित्तस्य स्थेमा न योगपक्षे वर्तते। कस्मात्, यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः। विपक्षवर्गान्तर्गतस्य हि स्वरूपमेव दुर्लभं प्रागेव कार्यकरणम्। न खलु दहनान्तर्गतं बीजं त्रिचतुरक्षणावस्थितमुप्तमप्यङ्कुराय कल्पत इति भावः।

यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हीत्यत आह—**यस्त्वेकाग्रे चेतसीति**। भूतमिति समारोपितमर्थं निवर्तयति। निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तम्—**सदिति**। शोभनं नितान्ताविर्भूतं सत्त्वम्। तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति। द्योतनं हि तत्त्वज्ञानमागमाद्वानुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति द्विचन्द्रदिङ्मोहादिष्वनुच्छेदकत्वादत आह—**प्रेति**। प्रशब्दो हि प्रकर्षं द्योतयन्साक्षात्कारं सूचयति। अविद्यामूलत्वादस्मितादीनां क्लेशानां, विद्यायाश्चाविद्योच्छेदरूपत्वाद्विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात्कारणविनाशाच्चेत्याह—**क्षिणोति चेति**। अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चात्रापूर्वमभिमतं कार्ये कारणोपचारात्। श्लथयति स्वकार्यादवसादयति। वक्ष्यति हि 'सति मूले तद्विपाकः' ( २।१३ ) इति। किं च निरोधमभिमुखं करोत्यभिमुखीकरोति। स च संप्रज्ञातश्चतुष्प्रकार इत्याह—**स चेति**। असंप्रज्ञातमाह—**सर्ववृत्तीति**। रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय संप्रज्ञाते निरुद्धा। असंप्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः। तदिह भूमिद्वये

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

सर्वशब्दाग्रहणात्संप्रज्ञातोऽपि योग इत्याख्यायते। चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात्त्रिगुणम्।

प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति। तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति। तदेव प्रक्षीण-

---

समाप्ता या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति सिद्धम् ॥ १ ॥

द्वितीयं सूत्रमवतारयति—तस्य लक्षणेति। तस्येति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति। योगश्चित्तवृत्तिनिरोधः। निरुध्यन्ते यस्मिन्प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः। ननु संप्रज्ञातस्य योगस्याव्यापकत्वादलक्षणमिदम्। अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह—**सर्वशब्दाग्रहणादिति**। यदि सर्वचित्तवृत्तिनिरोध इत्युच्येत भवेदव्यापकं संप्रज्ञातस्य। क्लेशकर्मविपाकाशयपरिपन्थी चित्तवृत्तिनिरोधस्तु तमपि संगृह्णाति। तत्रापि राजसतामसचित्तवृत्तिनिरोधात्तस्य च तद्भावादित्यर्थः। कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसंबन्धः किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या इत्याशङ्क्य प्रथमं तावदवस्थासंबन्धहेतुमुपन्यस्यति—चित्तं हीति। प्रख्याशीलत्वात्सत्त्वगुणम्। प्रवृत्तिशीलत्वाद्रजोगुणम्। स्थितिशीलत्वात्तमोगुणम्। प्रख्याग्रहणमुपलक्षणार्थम्। तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते। प्रवृत्त्या च परितापशोकादयो राजसाः। प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः। स्थितिग्रहणाद्गौरवावरणदैन्यादय उपलक्ष्यन्ते। एतदुक्तं भवति—एकमपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिमाणं सदनेकावस्थमुपपद्यत इति।

क्षिप्ताया एव चित्तस्य भूमीर्यथासंभवमवान्तरावस्थाभेदवतीरादर्शयति—**प्रख्यारूपं हीति**। चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्। तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्ते सत्त्वात्किञ्चिदूने रजस्तमसी यदा मिथः समे च भवतस्तदैश्वर्यं च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तम्। सत्त्वप्राधान्यात्खलु चित्तं तत्त्वे प्रणिधित्सदपि तत्त्वस्य तमसापिहितत्वादणिमादिकमैश्वर्यमेव तत्त्वमभिमन्यमानं तत्प्रणिधित्सति प्रणिधत्ते च क्षणम्। अथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थितिविशेषात्तत्प्रियमात्रं भवति। शब्दादिषु पुनरस्य स्वरसवाही प्रेमा निरूढ एव। तदनेन विक्षिप्तं चित्तमुक्तम्। क्षिप्तं चित्तं दर्शयन्मूढमपि सूचयति—**तदेव तमसेति**। यदा

मोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति।

तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति। तत्परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च, सत्त्व-

---

हि तमो रजो विजित्य प्रसृतं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं चित्तमधर्माद्युपगच्छति। अज्ञानं च विपर्ययज्ञानमभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम्। ततश्च मूढावस्थापि सूचितेति। अनैश्वर्यं सर्वत्रेच्छाप्रतीघातः। अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह – प्रक्षीणेत्यादि। मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम्। तथापि न धर्मायैश्वर्याय च कल्पते प्रवृत्त्यभावादित्यत आह—अनुविद्धं रजोमात्रया। रजसः प्रवर्तकत्वादस्ति धर्मादिप्रवृत्तिरित्यर्थः। तदनेन संप्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं संगृहीतम्।

संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह–तदेव। चित्तं रजोलेशान्मलादपेतमत एव स्वरूपप्रतिष्ठम्। अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्यानवसिताधिकारतया च कार्यकारिणो विवेकख्यातिः परं कार्यमवशिष्यत इत्याह—सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति। धर्ममेघश्च वक्ष्यते। अत्रैव योगिजनप्रसिद्धिमाह—तदिति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चित्तसामानाधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया द्रष्टव्यम्। विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुतां च विवेकख्यातेर्दर्शयति—चितिशक्तिरित्यादि। सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि हि विवेकिनं दुःखाकुरुतः। अतो दुःखवद्धेयौ। तथातिसुन्दरमप्यन्तवद्दुनोति। तेन तदपि हेयमेव विवेकिनः। सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्युक्तम्—शुद्धा चानन्ता चेति। ननु सुखदुःखमोहात्मकशब्दादीनियं चेतयमाना तदाकारापन्ना कथं विशुद्धा तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तम्—दर्शितविषयेति। दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता। भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषया-

गुणात्मिका चेयमतो विपरीता विवेकख्यातिरिति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। तदवस्थं संस्कारोपगं भवति। स निर्बीजः समाधिः। न तत्र किञ्चित्संप्रज्ञायत इत्यसंप्रज्ञातः। द्विविधः स योगश्चित्त-वृत्तिनिरोध इति॥ २॥

तदवस्थे चेतसि विषयाभावाद् बुद्धिबोधात्मा पुरुषः किंस्वभाव इति—

तदा द्रष्टुः स्वरूपेऽवस्थानम्॥ ३॥

---

कारतामापद्येत, किं तु बुद्धिरेव विषयाकारेण परिणता सत्यतदाकारायै चिति-शक्त्यै विषयमादर्शयति। ततः पुरुषश्चेतयत इत्युच्यते। ननु विषयाकारां बुद्धिमनारूढायाश्चितिशक्तेः कथं विषयवेदनं, विषयारोहे वा कथं न तदाकारा-पत्तिरित्यत उक्तम्—अप्रतिसंक्रमेति। प्रतिसंक्रमः संचारः। स चितेर्नास्ती-त्यर्थः। स एव कुतोऽस्या नास्तीत्यत उक्तम्—अपरिणामिनीति। न चिते-स्त्रिविधोऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति, येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः। असंक्रान्ताया अपि विषयसंवेद-नमुपपादयिष्यते। तत्सिद्धं चितिशक्तिः शोभनेति। विवेकख्यातिस्तु बुद्धि-सत्त्वात्मिकाऽशोभनेत्युक्तम्—अतश्चितिशक्तेर्विपरीतेति। यदा च विवेक-ख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः। तत-स्तद्धेतोर्निरोधमाधेरवतारो युज्यत इत्याह—अतस्तस्यामिति। ज्ञानप्रसाद-मात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः। अथ निरुद्धा-शेषवृत्ति चित्तं कीदृशमित्यत आह—तदवस्थमित्यादि। स निरोधोऽवस्था यस्य तत्तथोक्तम्। निरोधस्य स्वरूपमाह—स निर्बीज इति। क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजम्। तस्मान्निर्गत इति निर्बीजः। अस्यैव योगिजन-प्रसिद्धामन्वर्थसंज्ञामादर्शयति—न तत्रेति। उपसंहरति—द्विविधः स योग-श्चित्तवृत्तिनिरोध इति॥ २॥

संप्रत्युत्तरसूत्रमवतारयितुं चोदयति—तदवस्थे चेतसीति। किमाक्षेपे। तत्तदाकारपरिणतबुद्धिबोधात्मा खल्वयं पुरुषः सदानुभूयते न तु बुद्धिबोधरहि-तः। अतोऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुरिव प्रकाशः। न च संस्कारशेषे चेतसि सोऽस्ति। न च स्वभावमपहाय भावो वर्तितुमर्हतीति भावः। स्यादेतत्—संस्कारशेषामपि बुद्धिं कस्मात्पुरुषो न बुध्यत इत्यत आह—विषयाभावा-दिति। न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः। विवेकख्याति-विषयभोगौ च पुरुषार्थौ। तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषया-भाव इत्यर्थः। सूत्रेण परिहरति—तदा द्रष्टुः स्वरूपेऽवस्थानम्। स्वरूप इत्या-

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये।
व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा ॥ ३ ॥

कथं तर्हि ? दर्शितविषयत्वात्—

वृत्तिसारूप्यमितरत्र ॥ ४ ॥

व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः। तथा च सूत्रम्—

---

रोपितं शान्तघोरमूढस्वरूपं निवर्तयति। पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकं न तु बुद्धिबोधः शान्तादिरूपः। औपाधिको हि स स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसंनिधानोपाधिररुणिमा। न चोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः। स्वरूपस्य चाभेदेऽपि भेदं विकल्प्याधिकरणभाव उक्त इति। अयमेवार्थो भाष्यकृता द्योत्यते—स्वरूपप्रतिष्ठेति। तदानीम्—निरोधावस्थायां न व्युत्थानावस्थायामिति भावः। स्यादेतद्—व्युत्थानावस्थायामप्रतिष्ठिता स्वरूपे चितिशक्तिर्निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी सा स्यात्। व्युत्थाने वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोरविशेष इत्यत आह—व्युत्थानचित्ते त्विति। न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते। तेन यथा निरोधे तथैव व्युत्थानेऽपि। न खलु शुक्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः। प्रतिपत्ता तु तथाभूतमप्यतथात्वेनाभिमन्यते। निरोधसमाधिमपेक्ष्य संप्रज्ञातोऽपि व्युत्थानमेवेति ॥ ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति—कथं तर्हीति। यदि तथा भवन्ती न तथा केन तर्हि प्रकारेण प्रकाशत इत्यर्थः। हेतुपदमध्याहृत्य सूत्रं पठति—दर्शितविषयत्वाद्वृत्तिसारूप्यमितरत्र। इतरत्र व्युत्थाने याश्चित्तवृत्तयः शान्तघोरमूढास्ता एवाविशिष्टा अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः। सारूप्यमित्यत्र सशब्द एकपर्यायः। एतदुक्तं भवति—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः संनिधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीत्यध्यवस्यति। यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति। यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद्बुद्धिवृत्तिर्यद्यपि च प्राकृतत्वेनाचिद्रूपतयानुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन्पुरुषवृत्तिरिवानुभव इवावभासते। तथा चायमविपर्ययोऽप्यात्मा विपर्ययवानिवाभोक्तापि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इव विवेकख्यात्या प्रकाशते। एतच्च चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् (४।२२) इत्यत्र सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः (३।३५) इत्यत्र चोपपादयिष्यते। एतच्च मतान्तरेपि सिद्धमित्याह—तथा चेति। पञ्चशिखाचार्यस्य

'एकमेव दर्शनं ख्यातिरेव दर्शनम्' इति। चित्तमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः। तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिः संबन्धो हेतुः ॥ ४ ॥

ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—

वृत्तय पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥

---

सूत्रं 'एकमेव दर्शनं ख्यातिरेव दर्शनम्' इति। ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनानुभाव्या दर्शनं ततोऽन्यत्पुरुषस्य चैतन्यमनुभवो दर्शनमित्यत आह—ख्यातिरेव दर्शनमिति। उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीमभिप्रेत्यैतदुक्तम्—एकमेवेति। चैतन्यं तु पुरुषस्य स्वभावो न ख्यातेः। तत्तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति। तमुपपादयन्नाह—चित्तं स्वं भवति पुरुषस्य स्वामिन इति संबन्धः। ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता। न चास्य तज्जनितोपकारसंबन्धसंभवस्तदनुपकार्यत्वात्तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गादित्यत आह—अयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेनेति। न पुरुषसंयुक्तं चित्तमपि तु तत्संनिहितम्। संनिधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात्किं तु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः। तदुक्तम्—दृश्यत्वेनेति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथापि चित्तचैतन्ययोरभेदसमारोपाद्वृत्तिसारूप्यात्पुरुषस्येत्युक्तम्। तस्माच्चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता च पुरुषस्यापरिणामिता चेति सिद्धम्। ननु स्वस्वामिसंबन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किंनिमित्ता। न खल्वनिमित्तं कार्यमुत्पद्यते। यथाहुः—

"स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता।"

इति शङ्कामुपसंहारव्याजेनोद्धरति—तस्माच्चित्तवृत्तिबोधे। शान्तघोरमूढाकारचित्तवृत्त्युपभोगेनाद्यविद्यानिमित्तत्वादनादिः संयोगो हेतुरविद्यावासनयोश्च सन्तानो बीजाङ्कुरसन्तानवदनादिरिति भावः ॥ ४ ॥

स्यादेतत्—पुरुषो हि शक्य उपदिश्यते। न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यः। न च सहस्रेणापि पुरुषायुषैरलमिमाः कश्चित्परिगणयितुम्। असंख्याताश्च कथं निरोद्धव्या इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति—ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः।

क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः। ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः। क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति, अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथाजातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इति। एवं वृत्तिसंस्कार-

---

वृत्तिरूपोऽवयव्येकस्तस्य प्रमाणादयोऽवयवाः पञ्च। ततस्तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर्भवति। ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदाद्बह्वय इति बहुवचनमुपपन्नम्। एतदुक्तं भवति—चैत्रो वा मैत्रो वान्यो वा कश्चित्सर्वेषामेव तेषां वृत्तयः पञ्चतय्य एव नाधिका इति। चित्तस्येति चैकवचनं जात्यभिप्रायम्। चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति—क्लिष्टाक्लिष्टा इति। अक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति। अस्य व्याख्यानं—क्लेशहेतुका इति। क्लेशा अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः। यद्वा पुरुषार्थप्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारणत्वेन क्लेशायैव प्रवृत्तिः। क्लेशः क्लिष्टं तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिरत एव कर्माशयप्रचयक्षेत्रीभूताः। प्रमाणादिना खल्वयं प्रतिपत्तार्थमवसाय तत्र सक्तो द्विष्टो वा कर्माशयमाचिनोतीति भवन्ति धर्माधर्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति।

अक्लिष्टा व्याचष्टे—ख्यातिविषया इति। विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस्तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति। तेन सत्त्वपुरुषविवेकविषया यतोऽत एव गुणाधिकारविरोधिन्यः। कार्यारम्भणं हि गुणानामधिकारो विवेकख्यातिपर्यवसानं च तदिति चरिताधिकाराणां गुणानामधिकारं विरुन्धन्तीति। अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतद्—वीतरागजन्मादर्शनात्क्लिष्टवृत्तय एव सर्वे प्राणभृतः। न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टा वृत्तयः। न चामूषां भावेऽपि कार्यकारिता। विरोधिमध्यपातित्वात्। तस्मात्क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह—क्लिष्टप्रवाहेति। आगमानुमानाचार्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रमन्तरा तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसंकीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तरवर्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः। संस्कारपरिपाकक्रमेण क्लिष्टा एव तान्नदभिभवन्तीत्याह—तथाजातीयका इति। अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्तिसंस्कार-

चक्रमनिशमावर्तते। तदेवंभूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते प्रलयं वा गच्छतीति ॥ ५ ॥

ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः—

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्। फलम-

---

चक्रमनिशमावर्तते, आ निरोधसमाधेः। तदेवंभूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्यापाततः प्रलयं वा गच्छतीति परमार्थतः पिण्डीकृत्य सूत्रार्थमाह—ता इति। पञ्चधेत्यर्थकथनमात्रं न तु शब्दवृत्ति व्याख्यानम्। तयपः प्रकारेऽस्मरणात् ॥ ५ ॥

ताः स्वसंज्ञाभिरुद्दिशति—**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः**। निर्देशे यथावचनं विग्रहः। चार्थे द्वंद्वः समास इतरेतरयोगे। यथाऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या (२।५) इत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्त एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्येतेति तन्निरासाय वक्तव्यं पञ्चतय्य इति। एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजन्सामान्यलक्षणमाह—**प्रत्यक्षानुमानागमाः प्रमाणानि**। अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा। तत्करणं प्रमाणम्। विभागवचनं च न्यूनाधिकसंख्याव्यवच्छेदार्थम्। तत्र सकलप्रमाणमूलत्वात्प्रथमतः प्रत्यक्षं लक्षयति—**इन्द्रियेति**। अर्थस्येति समारोपितत्वं निषेधति। तद्विषयेति बाह्यगोचरतया ज्ञानाकारगोचरत्वं निवारयति। चित्तवर्तिनो ज्ञानाकारस्य बाह्यज्ञेयसंबन्धं दर्शयति—**बाह्यवस्तूपरागादिति**। व्यवहितस्य तदुपरागे हेतुमाह—**इन्द्रियप्रणालिकयेति**। सामान्यमात्रमर्थ इत्येके। विशेष एवेत्यन्ये। सामान्यविशेषतद्वत्तेत्यपरे वादिनः प्रतिपन्नाः। तन्निरासायाह—**सामान्यविशेषात्मन इति**। न तद्वत्ता किं तु तादात्म्यमर्थस्य। एतच्चैकान्तानभ्युपगमाद् (३।१३) इत्यत्र प्रतिपादयिष्यते। अनुमानागमविषयात्प्रत्यक्षविषयं व्यवच्छिनत्ति—**विशेषावधारणप्रधानेति**। यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते तथापि विशेषं प्रत्युपसर्जनीभूतमित्यर्थः। एतच्च साक्षात्कारोपलक्षणपरम्। तथा च विवेकख्यातिरपि लक्षिता भवति। फलविप्रतिपत्तिं निराकरोति—**फलं**

विशिष्टः पौरुषेयश्चित्तवृत्तिबोधः । बुद्धेः प्रतिसंवेदी पुरुष इत्युपरिष्टादुपपादयिष्यामः ।

अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः संबन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम् । यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत्, विन्ध्यश्चाप्राप्तिरगतिः । आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते, शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः । यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते,

---

पौरुषेयश्चित्तवृत्तिबोध इति । ननु पुरुषवर्ती बोधः कथं चित्तगताया वृत्तेः फलम्? न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियत इत्यत आह—अविशिष्ट इति । न हि पुरुषगतो बोधो जन्यते । अपि तु चैतन्यमेव बुद्धिवृत्त्यार्थाकारया तदाकारतामापद्यमानं फलम् । तच्च तथाभूतं बुद्धेरविशिष्टं बुद्ध्यात्मकं, वृत्तिश्च बुद्ध्यात्मिकेति सामानाधिकरण्याद्युक्तः प्रमाणफलभाव इत्यर्थः । एतच्चोपपादयिष्याम इत्याह—प्रतिसंवेदीति ।

प्रत्यक्षानन्तरं प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसंबन्धदर्शनसमुत्थतयागमस्यानुमानजत्वादनुमितस्य चागमेनान्वाख्यानादागमात्प्रागनुमानं लक्षयति—अनुमेयस्येति । जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयस्तस्य तुल्यजातीयाः साध्यधर्मसामान्येन समानार्थाः सपक्षास्तेष्वनुवृत्त इत्यनेन विरुद्धत्वमसाधारणत्वं च साधनधर्मस्य निराकरोति । भिन्नजातीया असपक्षास्ते च सपक्षादन्ये तद्विरुद्धास्तदभावश्च तेभ्यो व्यावृत्तस्तदनेन साधारणानैकान्तिकत्वमपाकरोति । संबध्यत इति संबन्धो लिङ्गम् । अनेन पक्षधर्मतां दर्शयन्नसिद्धतां निवारयति । तद्विषया तन्निबन्धना । षिञ् बन्धने (धा. पा. ५।२) इत्यस्माद्विषयपदव्युत्पत्तेः । सामान्यावधारणेति प्रत्यक्षविषयाद्व्यवच्छिनत्ति । संबन्धसंवेदनाधीनजमनुमानं विशेषेषु संबन्धग्रहणाभावेन सामान्यमेव सुकरसंबन्धग्रहं गोचरयतीति । उदाहरणमाह—यथेति । चो हेत्वर्थः । विन्ध्योऽगतिर्यतस्तस्मात्तस्याप्राप्तिरतो गतिनिवृत्तौ प्राप्तेर्निवृत्तेर्देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धम् । आगमस्य वृत्तेर्लक्षणमाह—आप्तेनेति । तत्त्वदर्शनकारुण्यकरणपाटवाभिसंबन्ध आप्तिस्तया सह वर्तत इत्याप्तस्तेन दृष्टोऽनुमितो वार्थः । श्रुतस्य पृथगनुपादानं तस्य दृष्टानुमितमूलत्वेन ताभ्यामेव चरितार्थत्वात् । आप्तचित्तवर्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तिस्तस्यै, अर्थ उपदिश्यते श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते । शेषं सुगमम् । यस्यागमस्याश्रद्धेयार्थो वक्ता, यथा यान्येव दश दाडिमानि तानि षडपूपा भविष्यन्तीति, न दृष्टानुमितार्थो यथा

मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात् ॥ ७ ॥

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

स कस्मान्न प्रमाणम् ? यतः प्रमाणेन बाध्यते । भूतार्थविषयत्वात्प्रमाणस्य । तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम् । तद्यथा—द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति ।

सेयं पञ्चपर्वा भवत्यविद्या, अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा

---

चैत्यं वन्देत स्वर्गकाम इति स आगमः प्लवते । नन्वेवं मन्वादीनामप्यागमः प्लवेत । न हि तेऽपि दृष्टानुमितार्थाः । यथाहुः—

य: कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ ( मनु० २।७ )

इत्यत आह—**मूलवक्तरि** त्विति । मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थ इत्यर्थः ॥ ७ ॥

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् । विपर्यय इति लक्ष्यनिर्देशः । मिथ्याज्ञानमित्यादि लक्षणम् । यज्ज्ञानप्रतिभासरूपं तद्रूपाप्रतिष्ठमेवातद्रूपप्रतिष्ठम् । यथाऽश्राद्धभोजीति, अतः संशयोऽपि संगृहीतः । एतावांस्तु विशेषः—तत्र ज्ञानारूढैवाप्रतिष्ठितता द्विचन्द्रादेस्तु बाधज्ञानेन । नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद्विचारतो विपर्ययः प्रसज्येतेत्यत आह—मिथ्याज्ञानमिति । अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः । स चास्ति विपर्यये न तु विकल्पे । तेन व्यवहारात् । पण्डितरूपाणामेव तु विचारयतां तत्र बाधबुद्धेरिति । चोदयति—**स कस्मान्न प्रमाणम्** । नोत्तरेणोपजातविरोधिना ज्ञानेन पूर्वं बाधनीयमपि तु पूर्वेणैव प्रथममुपजातेनानुपजातविरोधिना परमिति भावः । परिहरति—**यतः प्रमाणेनेति** । यत्र हि पूर्वापेक्षा परोत्पत्तिस्तत्रैवम् । इह तु स्वकारणादन्योन्यानपेक्षे ज्ञाने जायेते । तेनोत्तरस्य पूर्वमनुपमृद्योदयमनासादयतस्तदपबाधात्मैवोदयो न तु पूर्वस्योत्तरबाधात्मा । तस्य तदानीमप्रसक्तेः । तस्मादनुपजातविरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे । तस्माद्भूतार्थविषयत्वात्प्रमाणेनाप्रमाणस्य बाधनं सिद्धम् । उदाहरणमाह—**तत्र प्रमाणेनेति** ।

अस्य कुत्सितत्वं हानाय दर्शयति—**सेयं पञ्चेति** । अविद्यासामान्यमविद्यास्मितादिषु पञ्चसु पर्वस्वित्यर्थः । अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या तमः । एवं योगिनामष्टस्वणिमादिकेष्वैश्वर्येष्वश्रेयःसु श्रेयोबुद्धिरष्टविधो मोहः पूर्वस्माज्जघन्यः स चास्मितोच्यते । तथा योगेनाष्टविधमैश्वर्यमुपादाय सिद्धो भूत्वा दृष्टानुश्रविकाञ्शब्दादीन्दश विषयान्भोक्ष्य इत्येव-

इति। एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति, एते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

स न प्रमाणोपारोही, न विपर्ययोपारोही च। वस्तुशून्यत्वेपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति। यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते, भवति च व्यपदेशे वृत्तिः। यथा चैत्रस्य गौरिति। तथा प्रतिषिद्धवस्तुधर्मा निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थित इति। गतिनिवृत्तौ धात्वर्थमात्रं

---

मात्मिका प्रतिपत्तिर्महामोहो रागः। एवमेतेनैवाभिसंधिना प्रवर्तमानस्य केनचित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविकविषयोपभोगस्यासिद्धेः प्रतिबन्धकविषयः क्रोधः स तामिस्राख्यो द्वेषः। एवमणिमादिगुणसंपत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति यस्त्रासः सोऽभिनिवेशोऽन्धतामिस्रः। तदुक्तम्—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः॥ ( सां. का. ४८ ) इति॥ ८ ॥

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः।** ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तर्गतो विकल्पः प्रसज्येत निर्वस्तुकत्वे वा विपर्ययः स्यादित्यत आह — स नेति। न प्रमाणविपर्ययान्तर्गतः। कस्माद्यतो वस्तुशून्यत्वेऽपीति प्रमाणान्तर्गतिं निषेधति। शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्ययान्तर्गतिम्। एतदुक्तं भवति—क्वचिदभेदे भेदमारोपयति क्वचित्पुनर्भिन्नानामभेदम्। ततो भेदस्याभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणं नापि विपर्ययो व्यवहाराविसंवादादिति। शास्त्रप्रसिद्धमुदाहरणमाह—तद्यथेति। किं विशेष्यं केन व्यपदिश्यते विशेष्यते नाभेदे विशेष्यविशेषणभावो, न हि गवा गौर्विशेष्यते, किं तु भिन्नेनैव चैत्रेण। तदिदमाह—भवति च व्यपदेशे वृत्तिः। व्यपदेशव्यपदेश्ययोर्भावो व्यपदेशः, विशेषणविशेष्यभाव इति यावत्; तस्मिन्वृत्तिर्वाक्यस्य यथा चैत्रस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति—तथेति। प्रतिषिद्धो वस्तुनः पृथिव्यादेर्धर्मः परिस्पन्दो यस्य स तथोक्तः। कोऽसौ निष्क्रियः पुरुषः। न खलु सांख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः। क्वचित्पाठः प्रतिषिद्धा वस्तुधर्मा इति। तस्यार्थः—प्रतिषेधव्याप्ताः प्रतिषिद्धाः। न वस्तुधर्माणां तद्व्याप्यता भावाभावयोरसंबन्धादथ च तथा प्रतीतिरिति। लौकिकमुदाहरणमाह—तिष्ठति बाण इति। यथा हि पचति भिनत्तीत्यत्र

गम्यते । तथानुत्पत्तिधर्मा पुरुष इति उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः । तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति ॥९॥

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

सा च संप्रबोधे प्रत्यवमर्शात्प्रत्ययविशेषः । कथम्, सुखमहमस्वाप्सम् प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति । दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितम् । गाढं मूढोऽहमस्वाप्सम् गुरूणि मे गात्राणि क्लान्तं मे चित्तम् अलसं मुषितमिव तिष्ठतीति । स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो

---

पूर्वापरीभूतः कर्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयत एवं तिष्ठतीत्यत्रापि । पूर्वापरीभावमेवाह—स्थास्यति स्थित इति । ननु भवतु पाकवत्पूर्वापरीभूतया वस्थानक्रियया बाणाद्भिन्नया बाणस्य व्यपदेश इत्यत आह—**गतिनिवृत्तौ धात्वर्थमात्रं गम्यते** । गतिनिवृत्तिरेव तावत्कल्पिता तस्या अपि भावरूपत्वं तत्रापि पूर्वापरीभाव इत्यहो कल्पनापरम्परेत्यर्थः । अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुनः पुरुषव्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह—**तथानुत्पत्तिधर्मेति** । प्रमाणविपर्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे । तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यम् ॥ ९ ॥

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा** । अधिकृतं हि वृत्तिपदमनुवादकम् । प्रमाणविपर्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणामविप्रतिपत्तेः । अतस्तदनूद्यते विशेषविधानाय । निद्रायास्तु वृत्तित्वे परीक्षकाणामस्ति विप्रतिपत्तिरिति वृत्तित्वं विधेयम् । न च प्रकृतमनुवादकं विधानाय कल्पत इति पुनर्वृत्तिग्रहणम् । जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमस्तदेवालम्बनं विषयो यस्याः तथोक्ता वृत्तिर्निद्रा । बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसंज्ञ इत्युच्यते । कस्मात्पुनर्निरुद्धकैवल्ययोरिव वृत्त्यभाव एव न निद्रेत्यत आह—**सा च संप्रबोधे प्रत्यवमर्शा**त्सोपपत्तिकात्स्मरणात्**प्रत्ययविशेषः** । **कथम्** । यदा हि सत्त्वसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति स्वच्छीकरोतीति । यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह—**दुःखमहमस्वाप्सं स्त्यानम**कर्मण्यं **मे मनः** कस्माद्यतो **भ्रमत्यनवस्थितम्** । नितान्ताभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह—**गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति** । साध्यव्यतिरेके

न स्यादसति प्रत्ययानुभवे। तदाश्रिताः स्मृतयश्च तद्विषया न स्युः। तस्मात्प्रत्ययविशेषो निद्रा। सा च समाधावितरप्रत्ययवन्निरोद्धव्येति॥ १०॥

अनुभूतविषयासंप्रमोषः स्मृतिः॥ ११॥

किं प्रत्ययस्य चित्तं स्मरति आहोस्विद्विषयस्येति। ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्तज्जातीयकं संस्कारमारभते। स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति।

तत्र ग्रहणाकारपूर्वा बुद्धिः। ग्राह्याकारपूर्वा स्मृतिः। सा च द्वयी-

---

हेतुव्यतिरेकमाह—स खल्वयमिति। प्रबुद्धस्य। प्रबुद्धमात्रस्य बोधकाले। प्रत्ययानुभवे। वृत्त्यभावकारणानुभवे। तदाश्रिताः बोधजन्याः। तद्विषयाः। वृत्त्यभावकारणविषया इत्यर्थः। ननु प्रमाणादयो व्युत्थानचित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वात्। निद्रायास्त्वेकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्यत आह—सा च समाधाविति। एकाग्रतुल्यापि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति सापि निरोद्धव्येत्यर्थः॥ १०॥

अनूभूतविषयासंप्रमोषः स्मृतिः। प्रमाणादिभिरनुभूते विषये योऽसंप्रमोषोऽस्तेयं सा स्मृतिः। संस्कारमात्रजस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय आत्मीयस्तदधिकविषयपरिग्रहस्तु संप्रमोषः स्तेयम्। कस्मात्साहश्यात्। मुष स्तेये (धा. पा. ९।६१) इत्यस्मात्प्रमोषपदव्युत्पत्तेः। एतदुक्तं भवति—सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति। स्मृतिः पुनर्न पूर्वानुभवमर्यादामतिक्रामति। तद्विषया तदूनविषया वा न तु तदधिकविषया। सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति। विमृशति—किं प्रत्ययस्येति। ग्राह्यप्रवणत्वादनुभवस्य स्वानुभवाभावात्तज्जः संस्कारो ग्राह्यमेव स्मारयतीति प्रतिभाति। अनुभवमात्रजनितत्वाच्चानुभवमेव वेति। विमृश्योपपत्तित उभयस्मरणमवधारयति—ग्राह्यप्रवणतया ग्राह्योपरक्तः। परमार्थतस्तु ग्राह्यग्रहणे एवोभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति। स्वव्यञ्जकं कारणमञ्जनमाकारो यस्य स तथोक्तः। स्वकारणाकार इत्यर्थः। स्वकारणाकारव्यञ्जकमुद्बोधकं तेनाञ्जनं फलाभिमुखीकरणं यस्येति वेत्यर्थः।

ननु यदि कारणविचारेण बुद्धिस्मरणयोः सारूप्यं कस्तर्हि भेद इत्यत आह—तत्र ग्रहणेति। ग्रहणमुपादानम्। न च गृहीतस्योपात्तस्योपादानं संभवति। तदनेनानधिगतबोधनं बुद्धिरित्युक्तम्। ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता। विकल्पितश्चायमभेदेऽपि गुणप्रधानभाव इति। ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता। इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद्वृत्त्यन्तरविषयीकृतत्वमर्थस्य। तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं

भावितस्मर्तव्या चाभावितस्मर्तव्या च। स्वप्ने भावितस्मर्तव्या। जाग्रत्समये त्वभावितस्मर्तव्येति। सर्वाश्चैताः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात्प्रभवन्ति। सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः। सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः। सुखानुशयी रागः, दुःखानुशयी द्वेषः, मोहः पुनरविद्येति। एताः सर्वा वृत्तयो निरोद्धव्याः। आसां निरोधे संप्रज्ञातो वा समाधिर्भवत्यसंप्रज्ञातो वेति॥ ११॥

अथासां निरोधे क उपाय इति—

**अभ्यासवैराग्याभ्यां तन्निरोधः॥ १२॥**

चित्तनदी नामोभयतोवाहिनी वहति कल्याणाय, वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते, विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः॥ १२॥

**तत्र स्थितौ यत्नोऽभ्यासः॥ १३॥**

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः। तदर्थः प्रयत्नो वीर्य-

---

भवति। सोऽयमसंप्रमोष इति। नन्वस्ति स्मृतेरपि संप्रमोषः। दर्शयति हि पित्रादेरतीतस्य देशकालान्तरानुभूतस्याननुभूतचरदेशकालान्तरसंबन्धं स्वप्न इत्यत आह—**सा च द्वयीति**। भावितः कल्पितः स्मर्तव्यो यया सा तथोक्ता। अभावितोऽकल्पितः पारमार्थिक इति यावत्। नेयं स्मृतिरपि तु विपर्ययस्तल्लक्षणोपपन्नत्वात्। स्मृत्याभासतया तु स्मृतिरुक्ता। प्रमाणाभासमिव प्रमाणमिति भावः। कस्मात्पुनरन्ते स्मृतेरुपन्यास इत्यत आह—**सर्वाश्चैताः स्मृतय इति**। अनुभवः प्राप्तिः। प्राप्तिपूर्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः। ननु ये पुरुषं क्लिश्यन्ति ते निरोद्धव्याः प्रेक्षावता। क्लेशाश्च तथा, न च वृत्तयः। तत्किमर्थमासां निरोध इत्यत आह—**सर्वाश्चैता इति**। सुगमम्॥ ११॥

निरोधोपायं पृच्छति—**अथेति**। सूत्रेणोत्तरमाह—**अभ्यासवैराग्याभ्यां तन्निरोधः**। अभ्यासवैराग्ययोर्निरोधे जनयितव्येऽवान्तरव्यापारभेदेन समुच्चयो न तु विकल्प इत्याह—**चित्तनदीति**। प्राग्भारः प्रबन्धः। निम्नता गम्भीरता, अगाधतेति यावत्॥ १२॥

तत्राभ्यासस्य स्वरूपप्रयोजनाभ्यां लक्षणमाह—**तत्र स्थितौ यत्नोऽभ्यासः**। तद्व्याचष्टे—**चित्तस्यावृत्तिकस्य** राजसतामसवृत्तिरहितस्य **प्रशान्तवाहिता** विमलता सात्त्विकवृत्तिवाहितैकाग्रता **स्थितिः**। **तदर्थ इति**। स्थिताविति निमि-

मुत्साहः। तत्संपिपादयिषया तत्साधनानुष्ठानमभ्यासः ॥ १३ ॥

स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥

दीर्घकालासेवितो निरन्तरासेवितः, तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान्दृढभूमिर्भवति, व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥ १४ ॥

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

स्त्रियोऽन्नपानमैश्वर्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशी-

---

त्तसप्तमी व्याख्याता। यथा "चर्मणि द्वीपिनं हन्ति"; (महाभाष्य २।३।३६) इति। प्रयत्नमेव पर्यायाभ्यां विशदयति—वीर्यमुत्साह इति। तस्येच्छायोनितामाह—तत्संपिपादयिषया। तदिति स्थितिं परामृशति। प्रयत्नस्य विषयमाह—तत्साधनेति। स्थितिसाधनान्यन्तरङ्गबहिरङ्गाणि यमनियमादीनि। साधनगोचरः कर्तृव्यापारो न फलगोचर इति ॥ १३ ॥

ननु व्युत्थानसंस्कारेणानादिना परिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पत इत्यत आह—स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः। सोऽयमभ्यासो विशेषणत्रयसंपन्नः सन्दृढावस्थो न सहसा व्युत्थानसंस्कारैरभिभूतस्थितिरूपविषयो भवति। यदि पुनरेवंभूतमप्यभ्यासं कृत्वोपरमेत्ततः कालपरिवासेनाभिभूयेत। तस्मान्नोपरन्तव्यमिति भावः ॥ १४ ॥

वैराग्यमाह—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। चेतनाचेतनेषु दृष्टविषयेषु वितृष्णतामाह—स्त्रिय इति। ऐश्वर्यमाधिपत्यम्। अनुश्रवो वेदस्ततोऽधिगता आनुश्रविकाः स्वर्गादयः। तत्रापि वैतृष्ण्यमाह—स्वर्गेति। देहरहिता विदेहाः करणेषु लीनास्तेषां भावो वैदेह्यम्। अन्ये तु प्रकृतिमेवात्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीनास्तेषां भावः प्रकृतिलयत्वं तत्प्राप्तिविषये, आनुश्रविकविषये वितृष्णस्य। आनुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण उच्यते। ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्त विषयाप्राप्तावपि तदस्तीति वैराग्यं स्यादित्यत आह—दिव्यादिव्येति। न वैतृष्ण्यमात्रं वैराग्यमपि तु दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्यानाभोगात्मिका। तामेव स्पष्टयति—हेयोपादेयशून्या। आसङ्गद्वेषरहितोपेक्षाबुद्धिर्वशीकारसंज्ञा। कुतः पुनरियमित्यत्राह—प्रसंख्यानबलादिति।

कारसंज्ञा वैराग्यम् ॥ १५ ॥

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति । तद्द्वयं वैराग्यम् । तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम् । यस्योदये प्रत्युदितख्याति-

---

तापत्रयपरीतता विषयाणां दोषस्तत्परिभावनया तत्साक्षात्कारः प्रसंख्यानं तद्बलादित्यर्थः । यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति चतस्रः संज्ञा इत्यागमिनः । रागादयः खलु कषायाश्चित्तवर्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्तन्ते, तन्मा प्रवर्तिषतेन्द्रियाणि तत्तद्विषयेष्विति तत्परिपाचनायारम्भः प्रयत्नः सा यतमानसंज्ञा । तदारम्भे सति केचित्कषायाः पक्वाः पच्यन्ते पक्ष्यन्ते च केचित् । तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा । औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिः संज्ञात्रयात्परा वशीकारसंज्ञा । एतयैव च पूर्वासां चरितार्थत्वान्न ताः पृथगुक्ता इति सर्वमवदातम् ॥१५॥

अपरं वैराग्यमुक्त्वा परमाह—तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् । अपरवैराग्यस्य परं वैराग्यं प्रति कारणत्वम् । तत्र च द्वारमादर्शयति—**दृष्टानुश्रविकविषयदोषदर्शी विरक्त** इति । अनेनापरं वैराग्यं दर्शितम् । पुरुषदर्शनाभ्यासादागमानुमानाचार्योपदेशसमधिगतस्य पुरुषस्य दर्शनं तस्याभ्यासः पौनःपुन्येन निषेवणं तस्मात्तस्य दर्शनस्य शुद्धी रजस्तमःपरिहाण्या सत्त्वैकतानता तया यो गुणपुरुषयोः प्रकर्षेण विवेकः पुरुषः शुद्धोऽनन्तस्तद्विपरीता गुणा इति तेनाप्यायिता बुद्धिर्यस्य योगिनः स तथोक्तः । तदनेन धर्ममेघाख्यः समाधिरुक्तः । स तथाभूतो योगी गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यः सर्वथा विरक्तः सत्त्वपुरुषान्यताख्याताविपि गुणात्मिकायां यावद्विरक्त इति । तत्तस्माद्द्वयं वैराग्यम् । पूर्वं हि वैराग्यं सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसंपृक्ते चित्तसत्त्वे । तच्च तौष्टिकानामपि समानम् । ते हि तेनैव प्रकृतिलया बभूवुः । यथोक्तम्—वैराग्यात्प्रकृतिलय इति ( सां० का० ४५ )। तत्र तयोर्द्वयोर्मध्ये यदुत्तरं तज्ज्ञानप्रसादमात्रम् । मात्रग्रहणेन निर्विषयतां सूचयति । तदेव हि तादृशं चित्तसत्त्वं रजोलेशमलेनाप्यपरामृष्टमस्याश्रयोऽत एव ज्ञानप्रसाद इत्युच्यते । चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमःसंपर्कान्मलिनतामनुभवति । वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्वतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति ।

रेवं मन्यते-प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमः, यस्याविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति। ज्ञानस्यैव परा काष्ठा वैराग्यम्। एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते संप्रज्ञातः समाधिरिति—

वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ॥ १७ ॥

वितर्कश्चित्तस्यालम्बने स्थूल आभोगः। सूक्ष्मो विचारः। आनन्दो

---

तस्य गुणानुपादेयत्वाय दर्शयति—यस्योदये प्रत्युदितख्यातिः। ख्यातिविशेषे सति वर्तमानख्यातिमानित्यर्थः। प्रापणीयं कैवल्यं प्राप्तम्। यथा वक्ष्यति—जीवन्नेव विद्वान्मुक्तो भवति ( भाष्य ४।३० )। संस्कारमात्रस्य च्छिन्नमूलस्य सिद्धत्वादिति भावः। कुतः प्राप्तं, यतः—क्षीणाः क्षेतव्याः क्लेशा अविद्यादयः सवासनाः। नन्वस्ति धर्माधर्मसमूहो भवस्य जन्ममरणप्रबन्धस्य संक्रमः प्राणिनाम्। तत्कुतः कैवल्यमित्यत आह—छिन्न इति। श्लिष्टानि निःसंधीनि पर्वाणि यस्य स तथोक्तः। धर्माधर्मसमूहस्य समूहिनः पर्वाणि तानि श्लिष्टानि। न हि जातु जन्तुर्मरणजन्मप्रबन्धेन त्यक्ष्यते। सोयं भवसंक्रमः क्लेशक्षये छिन्नः। यथा वक्ष्यति—'क्लेशमूलः कर्माशयः' ( २।१२ ) 'सति मूले तद्विपाकः' ( २।१३ ) इति। ननु प्रसंख्यानपरिपाकं धर्ममेघं च निरोधमन्तरा किं तदस्ति यज्ज्ञानप्रसादमात्रमित्यत आह—ज्ञानस्यैवेति। धर्ममेघभेद एव परं वैराग्यं नान्यत्। यथा वक्ष्यति—'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' ( ४।२९ )। 'तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्' ( ४।३१ ) इति च। तस्मादेतस्य हि नान्तरीयकमविनाभावि कैवल्यमिति ॥ १६ ॥

उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति—अथोपायद्वयेनेति। वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः। संप्रज्ञातपूर्वकत्वादसंप्रज्ञातस्य प्रथमं संप्रज्ञातोपवर्णनम्। संप्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः स्वरूपैरनुगमात्प्रतिपत्तव्यम्। वितर्कं विवृणोति—चित्तस्येति। स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः। स च स्थूलविषयत्वात्स्थूलः। यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्ममेवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्यथ सूक्ष्ममिति। एवं चित्तस्यालम्बने सूक्ष्म आभोगः स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयो विचारः। तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति—आनन्द इति। इन्द्रिये स्थूलालम्बने चित्तस्याभोगो ह्लाद आनन्दः। प्रकाशशीलतया खलु सत्त्वप्रधानादहंकारादिन्द्रियाण्युत्पन्नानि। सत्त्वं सुखमिति तान्यपि सुखानीति तस्मिन्नाभोगो

ह्लादः। एकात्मिका संविदस्मिता। तत्र प्रथमश्चतुष्टयानुगतः समाधिः सवितर्कः। द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकलोऽस्मितामात्र इति। सर्व एते सालम्बनाः समाधयः॥ १७॥

अथासंप्रज्ञातः समाधिः किमुपायः किंस्वभावो वेति--

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः॥ १८॥**

सर्ववृत्तिप्रत्यस्तमये संकारशेषो निरोधश्चित्तस्य समाधिरसंप्रज्ञातः। तस्य परं वैराग्यमुपायः। सालम्बनो ह्यभ्यासस्तत्साधनाय न कल्पत इति विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते। स चार्थशून्यः। तदभ्यासपूर्वं चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसंप्रज्ञातः॥ १८॥

---

ह्लाद इति। ग्रहीतृविषयं संप्रज्ञातमाह—**एकात्मिका संविदिति**। अस्मिता- प्रभवानीन्द्रियाणि। तेनैषामस्मिता सूक्ष्मं रूपम्। सा चात्मना ग्रहीत्रा सह बुद्धिरेकात्मिका संवित्। तस्यां च ग्रहीतुरन्तर्भावाद्भवति ग्रहीतृविषयः संप्रज्ञात इति। चतुर्णामपरमप्यवान्तरविशेषमाह—**तत्र प्रथम इति**। कार्यं कारणानुप्रविष्टं न कारणं कार्येण। तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति। उत्तरे तु त्रिद्व्येककारणकास्त्रिद्व्येकरूपा भवन्ति। असंप्रज्ञाताद्भिनत्ति—**सर्व एत इति**॥ १७॥

क्रमप्राप्तमसंप्रज्ञातमवतारयितुं पृच्छति–**अथेति**। **विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः**। पूर्वपदेनोपायकथनमुत्तराभ्यां च स्वरूपकथनम्। मध्यमं पदं विवृणोति—**सर्ववृत्तीति**। प्रथमं पदं व्याचष्टे—**तस्य परमिति**। विरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणं तस्याभ्यासस्तदनुष्ठानं पौनःपुन्यं तदेव पूर्वं यस्य स तथोक्तः। अथापरं वैराग्यनिरोधकारणं कस्मान्न भवतीत्यत आह—**सालम्बनो हीति**। कार्यसरूपं कारणं युज्यते न विरूपम्। विरूपं चापरं वैराग्यं सालम्बनं निरालम्बनसमाधिना कार्येण। तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात्तस्योत्पत्तिर्युक्ता। धर्ममेघसमाधिरेव हि नितान्तविगलितरजस्तमोमलाद् बुद्धिसत्त्वादुपजातस्तद्विषयातिक्रमेण प्रवर्तमानोऽनन्तो विषयावद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादिति। आलम्बनीकरणमाश्रयणमभावप्राप्तमिव वृत्तिरूपकार्याकरणान्निर्बीजो निरालम्बनः। अथ वा बीजं क्लेशकर्माशयास्ते निष्क्रान्ता यस्मात्स तथा॥ १८॥

स खल्वयं द्विविधः—उपायप्रत्ययो भवप्रत्ययश्च । तत्रोपायप्रत्ययो योगिनां भवति—

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

विदेहानां देवानां भवप्रत्ययः । ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति । तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति, यावन्न पुनरावर्ततेऽधिकारवशाच्चित्तमिति ॥ १९ ॥

---

निरोधसमाधेरवान्तरभेदं हानोपादानाङ्गमादर्शयति—स खल्वयं निरोधसमाधिर्द्विविधः—उपायप्रत्ययो भवप्रत्ययश्च । उपायो वक्ष्यमाणः श्रद्धादिः प्रत्ययः कारणं यस्य निरोधसमाधेः स तथोक्तः । भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या, भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाऽव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मस्वात्मख्यातिस्तौष्टिकानां वैराग्यसंपन्नानाम् । स खल्वयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः । तत्र तयोर्मध्य उपायप्रत्ययो योगिनां मोक्षमाणानां भवति । विशेषविधानेन शेषस्य मुमुक्षुसंबन्धं निषेधति । केषां तर्हि भवप्रत्यय इत्यत्र सूत्रेणोत्तरमाह—भवप्रत्ययो विदेहप्रकृतिलयानाम् । विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः । तद्व्याचष्टे—विदेहानां देवानां भवप्रत्ययः । भूतेन्द्रियाणामन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिता विदेहाः । ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तो विदेहाः । अवृत्तिकत्वं च कैवल्येन सारूप्यं, साधिकारसंस्कारशेषता च वैरूप्यम् । संस्कारमात्रोपभोगेनेति क्वचित्पाठः । तस्यार्थः—संस्कारमात्रमेवोपभोगो यस्य न तु चित्तवृत्तिरित्यर्थः । प्राप्तावधयः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्त्यतिक्रामन्ति पुनरपि संसारे विशन्ति । तथा च वायुप्रोक्तम्—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णम्" इति । तथा प्रकृतिलयाश्चाव्यक्तमहदहंकारपञ्चतन्मात्रेष्वन्यतममात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमे लीनाः । साधिकारेऽचरितार्थे । एवं हि चरितार्थं चेतः स्याद्यदि विवेकख्यातिमपि जनयेदजनितसत्त्वपुरुषान्यताख्यातेस्तु चेतसोऽचरितार्थस्यास्ति साधिकारतेति । साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति, यावन्न पुनरावर्ततेऽधिकारवशाच्चित्तमिति । प्रकृतिसाम्यमुपगतमप्यवधिं प्राप्य पुनरपि प्रादुर्भवति ततो विविच्यते । यथा वर्षा-

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥

उपायप्रत्ययो योगिनां भवति। श्रद्धा चेतसः संप्रसादः। सा हि जननीव कल्याणी योगिनं पाति। तस्य हि श्रद्दधानस्य विवेकार्थिनो वीर्यमुपजायते। समुपजातवीर्यस्य स्मृतिरुपतिष्ठते। स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते। समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते, येन यथार्थं वस्तु जानाति। तदभ्यासात्तद्विषयाच्च वैराग्यादसंप्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति। तद्यथा—

---

तिपाते मृद्भावमुपगतो मण्डूकदेहः पुनरम्भोदवारिधारावसेकान्मण्डूकदेहभावमनुभवतीति। तथा च वायुप्रोक्तम्—

"सहस्रं त्वाभिमानिकाः।
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः॥
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते॥" इति।

तदस्य पुनर्भवप्राप्तिहेतुतया हेयत्वं सिद्धम् ॥ १९ ॥

योगिनां तु समाधेरुपायक्रममाह—**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्**। नन्विन्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्यत आह—**श्रद्धा चेतसः संप्रसादः**। स चागमानुमानाचार्योपदेशसमधिगततत्त्वविषयो भवति हि चेतसः संप्रसादोऽभिरुचिरतीच्छा श्रद्धा नेन्द्रियादिष्वात्माभिमानिनामभिरुचिरसंप्रसादो हि स व्यामोहमूलत्वादित्यर्थः। कुतोऽसावेव श्रद्धेत्यत आह—**सा हि जननीव कल्याणी योगिनं पाति** विमार्गपातजन्मनोऽनर्थात्। सोऽयमिच्छाविशेष इष्यमाणविषयं प्रयत्नं प्रसूत इत्याह—**तस्य हि श्रद्दधानस्य**। तस्य विवरणं—**विवेकार्थिनो वीर्यमुपजायते। स्मृतिर्ध्यानम्। अनाकुलम**विक्षिप्तम्। **समाधीयते** योगाङ्गसमाधियुक्तं भवति। यमनियमादिनान्तरीयकसमाध्युपन्यासेन च यमनियमादयोऽपि सूचिताः। तदेवमखिलयोगाङ्गसंपन्नस्य संप्रज्ञातो जायत इत्याह—**समाहितचित्तस्येति**। प्रज्ञाया विवेकः प्रकर्ष उपजायते। संप्रज्ञातपूर्वमसंप्रज्ञातोत्पादमाह—**तदभ्यासात्** तत्रैव तत्तद्भूमिप्राप्तौ **तद्विषयाच्च वैराग्यादसंप्रज्ञातः समाधिर्भवति**। स हि कैवल्यहेतुः। सत्त्वपुरुषान्यताख्यातिपूर्वो हि निरोधश्चित्तमखिलकार्यकरणेन चरितार्थमधिकारादवसादयति ॥ २० ॥

ननु श्रद्धादयश्चेद्योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्याताम्। दृश्यते तु कस्यचित्सिद्धिः कस्यचिदसिद्धिः कस्यचिच्चिरेण सिद्धिः कस्यचिच्चिरतरेण कस्यचित्क्षिप्रमित्यत आह—**ते खलु नव योगिन इति**। उपायः

मृदूपायो मध्योपायोऽधिमात्रोपाय इति। तत्र मृदूपायोऽपि त्रिविधः—मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति । तथा मध्योपायस्तथाधिमात्रोपाय इति। तत्राधिमात्रोपायानां—

तीव्रसंवेगानामासन्नः ॥ २१ ॥

समाधिलाभः समाधिफलं च भवतीति॥ १॥

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति, ततोऽपि विशेषः। तद्विशेषान्मृदुतीव्रसंवेगस्यासन्नस्ततो मध्यतीव्रसंवेगस्यासन्नतरस्तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्यासन्नतमः समाधिलाभः समाधिफलं चेति॥ २२॥

किमेतस्मादेवासन्नतरः समाधिर्भवति। अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति—

ईश्वरप्रणिधानाद्वा ॥ २३ ॥

प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण । तदभिध्यानमात्रादपि योगिन आसन्नतरः समाधिलाभः समाधिफलं च भवतीति॥ २३॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति ?

---

श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद्येषां ते तथोक्ताः। संवेगो वैराग्यं तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशादेवेति तेषु यादृशां क्षेपीयसी सिद्धिस्तान्दर्शयति सूत्रेण—तीव्रसंवेगानामासन्न इति सूत्रम्। शेषं भाष्यम्। समाधेः संप्रज्ञातस्य फलमसंप्रज्ञातस्तस्यापि कैवल्यम्॥ २१॥

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः । निगदव्याख्यातेन भाष्येण व्याख्यातमिति॥ २२॥

सूत्रान्तरं पातयितुं विमृशति—किमेतस्मादेवेति। नवाशब्दः संशयनिवर्तकः । ईश्वरप्रणिधानाद्वा। व्याचष्टे—प्रणिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वावर्जितोऽभिमुखीकृतस्तमनुगृह्णाति । अभिध्यानमनागतार्थेच्छा—इदमस्याभिमतमस्त्विति । तन्मात्रेण न व्यापारान्तरेण। शेषं सुगमम्॥ २३॥

ननु चेतनाचेतनाभ्यामेव व्यूढं नान्येन विश्वम्। ईश्वरश्चेदचेतनस्तर्हि प्रधानम्। प्रधानविकाराणामपि प्रधानमध्यपातात्। तथा च न तस्यावर्जनम्, अचेतनत्वात्। अथ चेतनस्तथापि चितिशक्तेरौदासीन्यादसंसारितया चास्मितादिविरहात्कुत आवर्जनं कुतश्चाभिध्यानमित्याशयवानाह—अथ प्रधानेति । अत्र सूत्रेणोत्तर-

## क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः। ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति। यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते। यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः।

कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः, ते हि त्रीणि बन्धनानि च्छित्त्वा कैवल्यं प्राप्ताः। ईश्वरस्य च तत्संबन्धो न भूतो न भावी। यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य। यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः संभाव्यते, नैवमीश्वरस्य। स तु सदैव मुक्तः सदैवेश्वर इति।

---

माह—क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। अविद्यादयः क्लेशाः। क्लिश्यन्ति खल्वमी पुरुषं सांसारिकविविधदुःखप्रहारेणेति।कुशलाकुशलानीति धर्माधर्माः।तेषां च कर्मजत्वादुपचारात्कर्मत्वम्। विपाको जात्यायुर्भोगाः। विपाकानुगुणा वासनास्ताश्चित्तभूमावाशेरत इत्याशयाः। न हि करभजातिनिर्वर्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते। तस्माद्भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति। नन्वमी क्लेशादयो बुद्धिधर्मा न कथंचिदपि पुरुषं परामृशन्ति। तस्मात्पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिनेत्यत आह—ते च मनसि वर्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते। कस्मात्, स हि तत्फलस्य भोक्ता चेतयितेति। तस्मात्पुरुषत्वादीश्वरस्यापि तत्संबन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह—यो ह्यनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः। विशिष्यत इति विशेषः। पुरुषान्तराद्व्यवच्छिद्यते।

विशेषपदस्य व्यावर्त्यं दर्शयितुकामः परिचोदनापूर्वं परिहरति—कैवल्यं प्राप्तास्तर्हीति। प्रकृतिलयानां प्राकृतो बन्धः। वैकारिको बन्धो विदेहानाम्। दक्षिणादिबन्धो दिव्यादिव्यविषयभोगभाजाम्। तान्यमूनि त्रीणि बन्धनानि। प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरमेव प्रकृतिलयतामापन्ना इति तेषां पूर्वा बन्धकोटिः प्रज्ञायते, तेनोत्तरकोटिविधानमात्रम्। इह तु पूर्वापरकोटिनिषेध इति। संक्षिप्य विशेषं दर्शयति—स तु सदैव मुक्तः सदैवेश्वर इति। ज्ञानक्रियाशक्तिसंपद् ऐश्वर्यम्।

**योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्त आहोस्विन्निर्निमित्त इति ? तस्य शास्त्रं निमित्तम् ।**

**शास्त्रं पुनः किंनिमित्तम् ? प्रकृष्टसत्त्वनिमित्तम् ।**

---

अत्र पृच्छति—**योऽसाविति** । ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः संभवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये । न चेश्वरस्य सदा मुक्तस्याविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावः संबन्धः संभवतीत्यत उक्तं—**प्रकृष्टसत्त्वोपादानादिति** । नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किं तु तापत्रयपरीतान्प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन । न च ज्ञानक्रियासामर्थ्यातिशयसंपत्तिमन्तरेण तदुपदेशः । न चेयमपहृतरजस्तमोमलविशुद्धसत्त्वोपादानं विनेत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानपरामृष्टोऽप्यविद्यया । अविद्याभिमानी चाविद्यायास्तत्त्वमविद्वान्भवति न पुनरविद्यामविद्यात्वेन सेवमानः । न खलु शैलूषो रामत्वमारोप्य तास्ताश्चेष्टा दर्शयन्भ्रान्तो भवति । तदिदमाहार्यमस्य रूपं न तात्त्विकमिति । स्यादेतत्—उद्दिधीर्षया भगवता सत्त्वमुपादेयं तदुपादानेन च तदुद्दिधीर्षा, अस्या अपि प्राकृतत्वात् । तथा चान्योन्यसंश्रय इत्यत उक्तं—**शाश्वतिक इति** । भवेदेतदेवं यदीदंप्रथमता सर्गस्य भवेत् । अनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवाञ्जगत्संजहार । तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितप्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवेश्वरचित्तसत्त्वभावेन परिणमते । यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठते प्रणिधानसंस्कारात् । तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्यसंश्रयः । न चेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि न प्रकृतिसाम्यमुपैतीति वाच्यम् । यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं नापि चितिशक्तिरशक्त्वादित्यर्थान्तरमप्रमाणिकमापद्येत । तच्चायुक्तम् । प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात् । सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः । किं सनिमित्तः सप्रमाणक आहोस्विन्निर्निमित्तो निष्प्रमाणक इति । उत्तरं—**तस्य शास्त्रं निमित्तम्** । श्रुतिस्मृतीतिहासपुराणानि शास्त्रम् ।

चोदयति—**शास्त्रं पुनः किंनिमित्तम्** । प्रत्यक्षानुमानपूर्वं हि शास्त्रम् न चेश्वरस्य सत्त्वप्रकर्षे कस्यचित्प्रत्यक्षमनुमानं वास्ति । न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तम् । कल्पयित्वापि ह्ययं ब्रूयादात्मैश्वर्यप्रकाशनायेति भावः । परिहरति- **प्रकृष्टसत्त्वनिमित्तम्** । अयमभिसंधिः—मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धम् । चौषधिभेदानां तत्सं-

एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः संबन्धः। एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्, न तावदैश्वर्यान्तरेण तदतिशय्यते। यदेवातिशयि स्यात्तदेव तत्स्यात्। तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः। न च तत्समानमैश्वर्यमस्ति, कस्मात्, द्वयोस्तुल्ययोरेकस्मिन्युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात्।

---

योगविशेषाणां च मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ। न चागमादन्वयव्यतिरेकौ ताभ्यां चागमस्तत्संतानयोरनादित्वादिति प्रतिपादयितुं युक्तम्। महाप्रलये तत्संतानयोर्विच्छेदात्। न च तद्भावे प्रमाणाभावः। अभिन्नं प्रधानविकारो जगदिति हि प्रतिपादयिष्यते। सदृशपरिणामस्य च विसदृशपरिणामता दृष्टा। यथा क्षीरेक्षुरसादेर्दधिगुडादिरूपा। विसदृशपरिणामस्य पूर्वं सदृशपरिणामता च दृष्टा। तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं कदाचित्सदृशपरिणामेनापि। सदृशपरिणामश्चास्य साम्यावस्था। स च महाप्रलयः। तस्मान्मन्त्रायुर्वेदप्रणयनात्तावद्भगवतो विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ संभवतः। तत्सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति।

स्यादेतत्—प्रकर्षकार्यतया प्रकर्षं बोधयच्छास्त्रं शेषवदनुमानं भवेन्न त्वागम इत्यत आह—एतयोरिति। न कार्यत्वेन बोधयत्यपि त्वनादिवाच्यवाचकभावसंबन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्तत इति। उपसंहरति—एतस्माद् ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्रादेतद्भवति ज्ञायते विषयेण विषयिणो लक्षणात्सदैवेश्वरः सदैव मुक्त इति। तदेवं पुरुषान्तराद्व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति—तच्च तस्येति। अतिशयविनिर्मुक्तिमाह—न तावदिति। कुतः—यदेवेति। कस्मात्सर्वातिशयविनिर्मुक्तं तदैश्वर्यमित्यत आह—तस्माद्यत्रेति। अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्यमित्यर्थः। साम्यविनिर्मुक्तिमाह—न च तत्समानमिति। प्राकाम्यमविहतेच्छता। तद्विघातादूनत्वम्। अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्यानुत्पत्तेः। उत्पत्तौ वा विरुद्धधर्मसमालिङ्गितमेकदा कार्यमुपलभ्येतेत्याशयवानाह—द्वयोश्चेति। अविरुद्धाभिप्रायत्वे च प्रत्येकमीश्वरत्वे कृतम-

तस्माद्यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः। स च पुरुषविशेष इति ॥ २४ ॥

किं च--

तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजमेतद्धि वर्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात्परिमाणवदिति।

यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः। स च पुरुषविशेष इति। सामान्यमात्रोपसंहारे च कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्, इति

---

न्यैरेकैनैवेशनायाः कृतत्वात्। संभूयकारित्वे वा न कश्चिदीश्वरः परिषद्वत्। नित्येशनायोगिनां च पर्यायायोगात्कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यम्। तस्मात्सर्वमवदातम् ॥२४॥

एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति—किञ्चेति—तत्र निरतिशयं सर्वज्ञबीजम्। व्याचष्टे—यदिदमिति। बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकं च समुच्चयेन च वर्तमानानामतीन्द्रियाणां ग्रहणं, तस्य विशेषणमल्पं बह्विति, सर्वज्ञबीजं कारणम्। कश्चित्किंचिदेवातीतादि गृह्णाति कश्चिद्बहु कश्चिद्बहुतरं कश्चिद्बहुतममिति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम्। एतद्धि वर्धमानं यत्र निष्क्रान्तमतिशयात्स सर्वज्ञ इति। तदनेन प्रमेयमात्रं कथितम्। अत्र प्रमाणयति—अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्येति। साध्यनिर्देशः। निरतिशयत्वं काष्ठा, यतः परमतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनम्। सातिशयत्वादिति हेतुः। यद्यत्सातिशयं तत्तत्सर्वं निरतिशयं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति—परिमाणवदिति। न च गरिमादिभिर्गुणैर्व्यभिचार इति सांप्रतम्। न खल्ववयवगरिमातिशयी गरिमावयविनः। किं त्वा परमाणुभ्य आन्त्यावयविभ्यो यावन्तः केचन तेषां सर्वेषां प्रत्येकवर्तिनो गरिम्णः समाहृत्य गरिमवर्धमानाभिमानः। ज्ञानं तु न प्रतिज्ञेयं समाप्यत इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः। उपसंहरति—यत्र काष्ठेति।

ननु सन्ति बहवस्तीर्थंकरा बुद्धार्हतकपिलर्षिप्रभृतयः। तत्कस्मात्त एव सर्वज्ञा न भवन्त्यस्मादनुमानादित्यत आह—सामान्येति। कुतस्तर्हि तद्विशेषप्रति-

तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्यन्वेष्या। तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्; ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति। तथा चोक्तम्—आदिविद्वान्निर्माणचित्तमधिष्ठाय

---

पत्तिरित्यत आह–तस्येति। बुद्धादिप्रणीतश्चागमाभासो न त्वागमः, सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः। तेन श्रुतिस्मृतीतिहासपुराणलक्षणादागमत आगच्छन्ति बुद्धिमारोहन्ति अस्माद्भ्युदयनिःश्रेयसोपाया इत्यागमः। तस्मात्संज्ञादिविशेषप्रतिपत्तिः, संज्ञाविशेषः शिवेश्वरादिः श्रुत्यादिषु प्रसिद्धः। आदिपदेन षडङ्गतादशाव्ययते संगृहीते। यथोक्तं वायुपुराणे—

"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥" (१२।३३)

तथा—"ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे॥" (तत्रैव १०।६५–६६) इति।

स्यादेतत्–नित्यतृप्तस्य भगवतो वैराग्यातिशयसंपन्नस्य स्वार्थे तृष्णासंभवात्कारुणिकस्य च सुखैकतानजनसर्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेरप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्यत आह—तस्यात्मानुग्रहाभावेऽपीति। भूतानां प्राणिनामनुग्रहः प्रयोजनम्। शब्दाद्युपभोगविवेकख्यातिरूपकार्यकरणात्किल चरितार्थं चित्तं निवर्तते। ततः पुरुषः केवली भवति। अतस्तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति। तेनाचरितार्थत्वाच्चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः। विवेकख्यात्युपायकथने द्वारमाह—ज्ञानधर्मोपदेशेनेति। ज्ञानं च धर्मश्च ज्ञानधर्मौ, तयोरुपदेशेन ज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिपरिपाकात्कल्पप्रलये ब्रह्मणो दिनावसाने यत्र सत्यलोकवर्जं जगदस्तमेति। महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः स्वकारणगामिनोऽतस्तदा मरणदुःखभाजः। कल्पेत्युपलक्षणमन्यदापि। स्वार्जितकर्मपाकवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्यर्थः। एतच्च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं कापिलानामपि सिद्धमित्याह–तथा चोक्तमिति। पञ्चशिखाचार्येण–आदिविद्वान् कपिल इति। आदिविद्वानिति पञ्चशिखाचार्यवचनमादिमुक्तस्वसंतानादिगुरुविषयं न त्वनादिमुक्तपरमगुरुविषयम्। आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान्मुक्तः स एव च गुरुरिति। कपिलस्यापि जायमानस्य महेश्वरानु-

कारुण्याद्भगवान्परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति ॥ २५ ॥

स एषः—

**पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥**

पूर्वे हि गुरवः कालेनावच्छिद्यन्ते। यत्रावच्छेदार्थेन कालो नोपावर्तते स एष पूर्वेषामपि गुरुः। यथास्य सर्गस्यादौ प्रकर्षगत्या सिद्धस्तथातिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥ २६ ॥

**तस्य वाचकः प्रणवः ॥ २७ ॥**

वाच्य ईश्वरः प्रणवस्य। किमस्य संकेतकृतं वाच्यवाचकत्वमथ प्रदीपप्रकाशवदवस्थितमिति। स्थितोऽस्य वाच्यस्य वाचकेन सह संबन्धः। संकेतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथावस्थितः पितापुत्रयोः संबन्धः

---

ग्रहादेव ज्ञानप्राप्तिः श्रूयत इति। कपिलो नाम विष्णोरवतारविशेषः प्रसिद्धः। स्वयंभू हिरण्यगर्भः। तस्यापि सांख्ययोगप्राप्तिर्वेदे श्रूयते। स एवेश्वर आदिविद्वान्कपिलो विष्णुः स्वयंभूरिति भावः। स्वायंभुवानां त्वीश्वर इति भावः ॥ २५ ॥

संप्रति भगवतो ब्रह्मादिभ्यो विशेषमाह—स एष इति। पातनिका—स एष इति। सूत्रम्—पूर्वेषामपि गुरुः कालेनानवच्छेदात्। व्याचष्टे—पूर्वे हीति। कालस्तु शतवर्षादिरवच्छेदार्थेनावच्छेदेन प्रयोजनेन नोपावर्तते न वर्तते। प्रकर्षस्य गतिः प्राप्तिः। प्रत्येतव्य आगमात्। तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः ॥ २६ ॥

संप्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह—**तस्य वाचकः प्रणवः**। व्याचष्टे—वाच्य इति। तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति—**किमस्येति**। वाचकत्वं प्रतिपादकत्वमित्यर्थः। परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः संबन्धः संकेतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत, ततो यत्र नास्ति स संबन्धस्तत्र संकेतशतेनापि न व्यज्येत। न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुम्। कृतसंकेतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः। ततः संकेमकृतमेव वाचकत्वमिति विमृश्याभिमतमवधारयति—**स्थितोऽस्येति**। अयमभिप्रायः—सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः संबन्धः। ईश्वरसंकेतस्तु प्रकाशकश्च नियामकश्च तस्य। ईश्वरसंकेतासंकेतकृतश्चास्य वाचकापभ्रंशविभागः। तदिदमाह—**संकेतस्त्वीश्वरस्येति**। निदर्शनमाह—**यथेति**। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावमुपगतस्य शक्तिरपि

संकेतेनावद्योत्यते, अयमस्य पिता, अयमस्य पुत्र इति। सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव संकेतः क्रियते। संप्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानते ॥ २७ ॥

विज्ञातवाच्यवाचकत्वस्य योगिनः—

तज्जपस्तदर्थभावनम् ॥ २८ ॥

प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनम्। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते। तथा चोक्तम्—

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमासते।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते॥ इति ॥ २८ ॥
( तुल० विष्णुपु० ६।६।२ )

किं चास्य भवति—

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

ये तावदन्तराया व्याधिप्रभृतयस्ते तावदीश्वरप्रणिधानान्न भवन्ति।

---

प्रलीना। ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण संकेतेन न शक्या वाचकशक्तिरभिज्वलयितुं विनष्टशक्तित्वादित्यत आह—सर्गान्तरेष्वपीति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भवंस्तच्छक्तियुक्त एवाविर्भवति वर्षातिपातसमधिगतमृद्भाव इवोद्भिज्जो मेघविसृ-राविष्ट धारावसेकात्। तेन पूर्वसंबन्धानुसारेण संकेतः क्रियते भगवतेति। तस्मात्संप्रतिपत्तेः सदृशव्यवहारपरम्पराया नित्यतया नित्यः शब्दार्थयोः सम्बन्धो न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव संकेत इति प्रतिपत्तुमीशत इति भावः ॥ २७ ॥

वाचकमाख्याय प्रणिधानमाह—तज्जपस्तदर्थभावनम्। व्याचष्टे—प्रणवस्येति। भावनं पुनः पुनश्चित्ते निवेशनम्। ततः किं सिध्यतीत्यत आह—प्रणवमिति। एकाग्रं संपद्यते, एकस्मिन्भगवत्यारमति चित्तम्। अत्रैव वैयासिकीं गाथामुदाहरति—तथा चेति। तत ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति ॥ २८ ॥

किं च परमस्मात्—ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च। प्रतीपं विपरीतमञ्चति विजानातीति प्रत्यक्स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः। तदनेनेश्वराच्छाश्वतिकसत्त्वोत्कर्षसंपन्नाद्विद्यावतो निवर्तयति। अविद्यावतः प्रतीचश्चेतनस्याधिगमो ज्ञानं स्वरूपतोऽस्य भवति। अन्तारायाा वक्ष्यमाणास्तदभावश्च। अस्य विवरणं—ये तविदिति। स्वमात्मा तस्य रूपम्। रूपग्रहणेनाविद्यासमारोपितान्धर्मान्निषेधति। नन्वीश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं

स्वरूपदर्शनमप्यस्य भवति। यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथायमपि बुद्धेः प्रतिसंवेदी यः पुरुष इत्येवमधिगच्छति ॥ २९ ॥

अथ केऽन्तरायाः ? ये चित्तस्य विक्षेपाः। के पुनस्ते कियन्तो वेति ?

व्याधिस्त्यानसंशयप्रमादालस्याविरति-
भ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि
चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥

नवान्तरायाश्चित्तस्य विक्षेपाः, सहैते चित्तवृत्तिभिर्भवन्ति। एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः। तत्र व्याधिर्धातुरसकरणवैषम्यम्। स्त्यानमकर्मण्यता चित्तस्य। संशय उभयकोटिस्पृग्विज्ञानं—स्यादिदमेवं नैवं स्यादिति। प्रमादः समाधिसाधनानामभावनम्। आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिश्चित्तस्य विषयसंप्रयोगात्मा गर्धः। भ्रान्तिदर्शनं विपर्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं लब्धायां भूमौ चित्तस्याप्रतिष्ठा। समाधिप्रतिलम्भे हि सति

---

साक्षात्करोत्यतिप्रसङ्गादित्यत आह—यथैवेश्वर इति। शुद्धः कूटस्थनित्यतयोदयव्ययरहितः, प्रसन्नः क्लेशवर्जितः, केवलो धर्माधर्मापेतः। अत एवानुपसर्गः। उपसर्गा जात्यायुर्भोगाः सादृश्यस्य किञ्चिद्भेदाधिष्ठानत्वादीश्वराद् भिनत्ति—बुद्धेः प्रतिसंवेदीति। तदनेन प्रत्यग्ग्रहणं व्याख्यातम्। अत्यन्तविधर्मिणोरन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते। सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगितामनुभवति एकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगिताम्। प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्वमवदातम् ॥ २९ ॥

पृच्छति—अथ क इति। सामान्येनोत्तरम्—य इति। विशेषसंख्ये पृच्छति—के पुनः इति। उत्तरं व्याधीत्यादिसूत्रम्। अन्तराया नव। एताश्चित्तवृत्तयो योगान्तराया योगविरोधिनश्चित्तस्य विक्षेपाः। चित्तं खल्वमी व्याध्यादयो योगाद्विक्षिपन्त्यपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुमाह—सहैत इति। संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ। येऽपि न वृत्तयो व्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्यात्तत्प्रतिपक्षा इत्यर्थः। पदार्थान्व्याचष्टे—व्याधिरिति। धातवो वातपित्तश्लेष्माणः, शरीरधारणात्। अशितपीताहारपरिणामविशेषो रसः। करणानीन्द्रियाणि। तेषां वैषम्यं न्यूनाधिकभाव इति। अकर्मण्यता कर्मानर्हता। संशय उभयकोटिस्पृग्विज्ञानम्। सत्यप्येतद्रूपप्रतिष्ठत्वेन संशयविपर्यासयोरभेदे उभयकोटिस्पर्शास्पर्शरूपावान्तरविशेषविवक्षयात्र भेदेनोपन्यासः।

तदवस्थितं स्यादिति। एते चित्तविक्षेपा नव योगमला योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते ॥३०॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥३१॥

दुःखमाध्यात्मिकमाधिभौतिकमाधिदैविकं च। येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद्दुःखम्। दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्। प्राणो यद्बाह्यं वायुमाचामति स श्वासः। यत्कौष्ठ्यं निःसारयति स प्रश्वासः। एते विक्षेपसहभुवो विक्षिप्तचित्तस्यैते भवन्ति। समाहितचित्तस्यैते न भवन्ति ॥ ३१ ॥

अथैते विक्षेपाः समाधिप्रतिपक्षास्ताभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्या तत्राभ्यासस्य विषयमुपसंहरन्निदमाह—

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं चित्तमभ्यसेत्। यस्य तु प्रत्यर्थनियतं

---

अभावनमकरणं तत्राप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना। चित्तस्य गुरुत्वं तमसा। गर्धस्तृष्णा। मधुमत्यादयः समाधिभूमयः। लब्धभूमेर्यदि तावत्तैव सुस्थितंमन्यस्य समाधिभ्रेषः स्यात्ततस्तस्या अपि भूमेरपायः स्यात्। यस्मात्समाधिप्रतिलम्भे तदवस्थितं स्यात्तस्मात्तत्र प्रयतितव्यमिति ॥३०॥

न केवलं नवान्तराया दुःखादयोऽप्यस्य तत्सहभुवो भवन्तीत्याह—दुःखेति। प्रतिकूलवेदनीयं दुःखमाध्यात्मिकं शारीरं व्याधिवशान्मानसं च कामादिवशात्। आधिभौतिकं व्याघ्रादिजनितम्। आधिदैविकं ग्रहपीडादिजनितम्। तच्चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्याह—येनाभिहता इति। अनिच्छतः प्राणो यद्बाह्यं वायुमाचमति पिबति प्रवेशयतीति यावत्स श्वासः समाध्यङ्गरेचकविरोधी। अनिच्छतोऽपि प्राणो यत्कौष्ठ्यं वायुं निःसारयति निश्वारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी ॥३१॥

उक्तार्थोपसंहारसूत्रमवतारयति—अथैत इति। अथोक्तार्थानन्तरमुपसंहरन्निदं सूत्रमाहेति संबन्धः। निरोद्धव्यत्वे हेतुरुक्तः—समाधिप्रतिपक्षा इति। यद्यपीश्वरप्रणिधानादित्यभ्यासमात्रमुक्तं तथापि वैराग्यमिह तत्सहकारितया ग्राह्यमित्याह—ताभ्यामुक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्र तयोरभ्यासवैराग्ययोर्मध्येऽभ्यासस्यानन्तरोक्तस्येति। तत्प्रतिषेधार्थमित्यादि। एकं तत्त्वमीश्वरः प्रकृतत्वादिति। वैनाशिकानां तत्सर्वमेकाग्रमेव चित्तं नास्ति किञ्चिद्विक्षिप्तमिति तदुपदेशानां तदर्थानां च प्रवृत्तीनां वैयर्थ्यमित्याह—यस्य त्विति। यस्य मते प्रत्यर्थेऽर्प्यमाण एकस्मिन्ननेकस्मिन्वा नियतं याव-

प्रत्ययमात्रं क्षणिकं च चित्तं तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तम्। यदि पुनरिदं सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधीयते तदा भवत्येकाग्रमित्यतो न प्रत्यर्थनियतम्।

योऽपि सदृशप्रत्ययप्रवाहेन चित्तमेकाग्रं मन्यते तस्यैकाग्रता यदि प्रवाहचित्तस्य धर्मस्तदैकं नास्ति प्रवाहचित्तं क्षणिकत्वात्। अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं चित्तमिति।

यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन्नथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत्, अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः

---

दर्थावभासमुत्पन्नं तत्रैव समाप्तमनन्यगामि। अर्थान्तरं तावत्प्रथमं गृहीत्वार्थान्तरमपि पश्चात्कस्मान्न गृह्णातीत्यत आह—**क्षणिकं च**। क्षणस्याभेद्यत्वेन पूर्वपश्चाद्भावस्याप्यभाव इति भावः। अस्मन्मते त्वक्षणिकं चित्तं स्वविषय एकस्मिन्ननेकस्मिन्वानवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्यागाभ्यां विषयानियतं विक्षिप्तमतो विक्षेपपरिणाममपनीय शक्यैकाग्रताधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थकत्वमित्याह—**यदि पुनरिदमिति**। उपसंहरति—**अतो नेति**। वैनाशिकमुत्थापयति—**योऽपीति**। मा भूदेकस्मिन्क्षणिके चित्त एकाग्रताधानप्रयत्नः। चित्तसंताने त्वनादावक्षणिके विक्षेपमपनीयैकाग्रताधास्यत इत्यर्थः। तदेतद्विकल्प्य दूषयति—**तस्येति**। तस्य दर्शन एकाग्रता यदि प्रवाहचित्तस्य चित्तसंतानस्य वा धर्मः। तत्रैकं क्रमवदुत्पादेषु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तम्। कुतः? यद्यावदस्ति तस्य सर्वस्य क्षणिकत्वादक्षणिकस्य चासत्त्वाद्भवतां दर्शन इति भावः। द्वितीयं कल्पं गृह्णाति—**अथेति**। सांवृतस्य प्रवाहस्यांशः प्रत्ययः परमार्थः सन्, तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः। दूषयति—**स सर्व इति**। सांवृतप्रवाहापेक्षया सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा। अतः परमार्थसता रूपेण प्रत्यर्थनियतत्वाद्यदर्थावभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः, यदपनयेनैकाग्रताधीयत इति। उपसंहरति **तस्मादिति**।

इतोऽपि चित्तमेकमनेकार्थमवस्थितं चेत्याह—**यदि चेति**। यथा हि मैत्रेणाधीतस्य शास्त्रस्य न चैत्रः स्मरति। यथा मैत्रेणोपचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं तदसंबन्धो चैत्रो न भुङ्क्त एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्। प्रत्ययान्तरोपचितस्य वा कर्माशयस्य फलं च न प्रत्ययान्तरमुपभुञ्जीतेत्यर्थः। ननु नातिप्रसज्यते, कार्यकारणभावे सतीति विशेषणाच्छ्राद्धवैश्वानरी-

प्रत्यय उपभोक्ता भवेत् ? कथंचित्समाधीयमानमप्येतद्गोमयपायसीयन्याय मात्तिपति।

किं च स्वात्मानुभवापह्नवश्चित्तस्यान्यत्वे प्राप्नोति। कथम् ? यदह-मद्राक्षं तत्स्पृशामि यच्चास्प्राक्षं तत्पश्याम्यहमिति प्रत्ययः सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिन्यभेदेनोपस्थितः। एकप्रत्ययविषयोऽयमभेदात्माहमिति प्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्तमानं सामान्यमेकं प्रत्ययिनमाश्रयेत् ? स्वानुभवग्राह्यश्चायमभेदात्माहमिति प्रत्ययः। न च प्रत्यक्षस्य माहात्म्यं

---

येष्ट्यादावकर्तृमातृपितृपुत्रादिगामिफलदर्शनान्मधुररसभावितानामाम्रबीजादी-नां परम्परया फलमाधुर्यनियमादित्यत आह—कथञ्चित् समाधीयमानमप्येत-दिति। अयमभिसंधिः—कः खल्वेकसंतानवर्तिनां प्रत्ययानां संतानान्तरवर्तिभ्यः प्रत्ययेभ्यो विशेषो येनैकसंतानवर्तिना प्रत्ययेनाणुभूतस्योपचितस्य च कर्मा-शयस्य तत्संतानवर्त्येव प्रत्ययः स्मर्ता भोक्ता च स्यान्नान्यसंतानवर्ती। न हि संतानो नाम कश्चिदस्ति वस्तुसन् य एनं संतानिनं संतानान्तरवर्तिभ्यो भिन्द्यात्। न च काल्पनिको भेदः क्रियायामुपपद्यते। न खलु कल्पिताग्निभावो माणवकः पचति। न च कार्यकारणभावसंबन्धोऽपि वास्तवः। सहभुवोः सव्येतरविषाणयोरिवा-भावादसहभुवोरपि प्रत्युत्पन्नाश्रयत्वायोगात्। न ह्यतीतानागतौ व्यासज्य प्रत्यु-त्पन्नं वर्तितुमर्हतः। तस्मात्संतानेन वा कार्यकारणभावेन वा स्वाभाविकेनानुप-हिताः परमार्थसन्तः प्रत्ययाः परस्परासंस्पर्शित्वेन स्वसंतानवर्तिभ्यः परसंतानव-र्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते। सोऽयं गोमयं च पायसं चाधिकृत्य प्रवृत्तो न्यायः—गोमयं पायसं गव्यत्वादुभयसिद्धपायसवदिति। तमाक्षिपति न्यायाभासत्वेन ततोऽप्यधिकत्वादिति। न चात्र कृतनाशाकृताभ्यागमचोद्यम्। यतश्चित्तमेव कर्मणां कर्तृ तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते। सुखदुःखे च चितिच्छायापन्नं चित्तं भुङ्क्ते इति पुरुषे भोगाभिमानश्चितिचित्तयोरभेद-ग्रहादिति। स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभाव एवैषां तादृशो यत्त एव स्मरन्ति फलं चोपभुञ्जते न त्वन्ये। न च स्वभावो नियोगपर्यनुयोगावर्हति, एवं भवतु मैवं भूदिति वा कस्मान्नैवमिति वेति।

यः पूर्वोक्ते न परितुष्यति तं प्रत्याह—किं च स्वात्मेति। उदयव्ययधर्माणा-मनुभवानामनुभवस्मृतीनां च नानात्वेऽपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसंदधानः कथमत्यन्तभिन्नान्प्रत्ययानालम्बेत्। ननु ग्रहणस्मरणरूपकारण-भेदात्पारोक्ष्यापरोक्ष्यरूपविरुद्धधर्मसंसर्गाद्वा न प्रत्यभिज्ञानं नामैकः प्रत्ययो यतः प्रत्ययिनश्चित्तस्यैकता स्यादित्यत आह—स्वानुभवेति। ननु कारणभेदविरुद्ध-

प्रमाणान्तरेणाभिभूयते । प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते। तस्मादेकमनेकार्थमवस्थितं च चित्तम् ॥ ३२ ॥

यस्येदं शास्त्रेण परिकर्म निर्दिश्यते तत्कथम्—

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

तत्र सर्वप्राणिषु सुखसंभोगापन्नेषु मैत्रीं भावयेत्, दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम्, अपुण्यशीलेषूपेक्षाम्। एवमस्य भावयतः शुक्लो धर्म उपजायते। ततश्च चित्तं प्रसीदति, प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद्वमनं प्रच्छर्दनम्। विधारणं प्राणायामः। ताभ्यां वा मनसः स्थितिं संपादयेत् ॥ ३४ ॥

---

धर्मसंसर्गावत्र बाधकावुक्तावित्यत आह—न च प्रत्यक्षस्येति। प्रत्यक्षानुसारत एव सामग्र्यभेदः पारीक्ष्यापरोक्ष्यधर्माविरोधश्चोपपादितो न्यायकणिकायाम्। अक्षणिकस्य चार्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्यामुपपादितेति सर्वमवदातम् ॥ ३२ ॥

अपरिकर्मितमनसोऽसूयादिमतः समाधितदुपायमंपत्त्यनुत्पादाच्चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते—यस्येदमिति। यस्य चित्तस्य व्युत्थितस्येदं परिकर्मेत्यर्थः। मैत्रीकरुणेत्यादिप्रसादनान्तम् सूत्रम्। सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्तते चित्तस्य। दुःखितेषु च करुणामात्मनीव परस्मिन्दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतोऽसूयाकालुष्यं चेतसो निवर्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्तते। ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते। सत्त्वोत्कर्षसंपन्नः सम्भवति, वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति। प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते। असत्यां पुनर्मैत्र्यादिभावनायां न त उपायाः स्थित्यै कल्पन्त इति ॥ ३३ ॥

तानिदानीं स्थित्युपायानाह—प्रच्छर्दनविधारणाभ्यां वा प्राणस्य। वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थः, न मैत्र्यादिभावनापेक्षया। तया सह समुच्चयात्। प्रच्छर्दनं विवृणोति—कौष्ठ्यस्येति। प्रयत्नविशेषाद्योगशास्त्रविहिताद्येन कौष्ठ्यो वायुर्नासिकापुटाभ्यां शनै रेच्यते। विधारणं विवृ-

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः
स्थितिनिबन्धनी ॥ ३५ ॥

नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः। जिह्वाग्रे रससंवित्। तालुनि रूपसंवित्। जिह्वामध्ये स्पर्शसंवित्। जिह्वामूले शब्दसंविदित्येता वृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायां च द्वारीभवन्तीति। एतेन चन्द्रादित्यग्रहमणिप्रदीपरश्म्यादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तत्तच्छास्त्रानुमानाचार्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति, एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात्, तथापि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति तावत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति। तस्माच्छास्त्रानुमानाचार्योपदेशोपोद्बलनार्थमेवावश्यं कश्चिद् विशेषः प्रत्यक्षीकर्तव्यः। तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं सुसूक्ष्मविषयमप्यापवर्गाच्छ्रद्धीयते। एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते। अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां चित्तं समर्थं स्यात्तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति। तथा च सति श्रद्धावीर्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

---

णोति—विधारणं प्राणायामः। रेचितस्य प्राणस्य कौष्ठ्यस्य वायोर्यदायामो बहिरेव स्थापनं न तु सहसा प्रवेशनम्। तदेताभ्यां प्रच्छर्दनविधारणाभ्यां वायोर्लघूकृतशरीरस्य मनः स्थितिपदं लभते। अत्र चोत्तरसूत्रगतात्स्थितिनिबन्धनीति पदात्स्थितिग्रहणमाकृष्य संपादयेदित्यर्थप्राप्तेन संबन्धनीयम् ॥३४॥

स्थित्युपायान्तरमाह—विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी। व्याचष्टे—नासिकाग्रे धारयत इति। धारणाध्यानसमाधीन्कुर्वतस्तज्जयाद्या दिव्यगन्धसंवित्तत्साक्षात्कारः। एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात्प्रत्येतव्यं नोपपत्तितः। स्यादेतत्—किमेतादृग्भिर्वृत्तिषु कैवल्यं प्रत्यनुपयोगिनीभिरित्यत आह—एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेकख्यातिविषयायां वा स्थितौ निबध्नन्ति। नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नातीत्यत आह—संशयं विधमन्ति अपसारयन्ति अत एव समाधिप्रज्ञायामिति। वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमतिदिशति—एतेनेति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशय इत्यत आह—यद्यपि हीति। श्रद्धामूलो हि योग उपदिष्टार्थैकदेशप्रत्यक्षी-

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्तते। हृदयपुण्डरीके धारयतो या बुद्धिसंवित्, बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं, तत्र स्थितिवैशारद्यात्प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते। तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति। यत्रेदमुक्तम्—तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत्संप्रजानीत इति। एषा द्वयी विशोका विषयवती, अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते यया योगिनश्चित्तं स्थितिपदं लभत इति॥ ३६॥

---

करणे च श्रद्धातिशयो जायते। तन्मूलाश्च ध्यानादयोऽस्याप्रत्यूहं भवन्तीत्यर्थः॥ ३५॥

विशोका वा ज्योतिष्मती। विगतशोका दुःखरहिता। ज्योतिष्मती ज्योतिरस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। हृदयपुण्डरीक इति। उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठत्यष्टदलं रेचकप्राणायामेन तदूर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्, तन्मध्ये सूर्यमण्डलमकारो जागरितस्थानं, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्। तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्, यस्योपरि परव्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्धमात्रमुदाहरन्ति ब्रह्मवादिनः। तत्र कर्णिकायामूर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी। ततोप्यूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी, तया खलु बाह्यान्यपि सूर्यादीनि मण्डलानि प्रोतानि। सा हि चित्तस्थानम्, तस्यां धारयतो योगिनश्चित्तसंविदुपजायते। उपपत्तिपूर्वकंवद बुद्धिसं आकारमादर्शयति—बुद्धिसत्त्वं हीति। आकाशकल्पमिति व्यापितामाह। सूर्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनश्चात्र बुद्धिरभिमतं न तु महत्तत्त्वम्। तस्य च सुषुम्नास्थस्य वैकारिकाहङ्कारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता, तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धम्। अस्मिताकार्ये मनसि समापत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह—तथेति। शान्तमपगतरजस्तमस्तरङ्गम्। अनन्तं व्यापि अस्मितामात्रं न पुनर्नानाप्रभारूपम्। आगमान्तरेण स्वमतं समीकरोति यत्रेति। यत्रेदमुक्तं पञ्चशिखेन। तमणुं दुरधिगमत्वादात्मानमहंकारास्पदमनुविद्यानुचिन्त्यास्मीत्येवं तावज्जानीत इति। स्यादेतद्—नानाप्रभारूपा भवतु ज्योतिष्मती कथमस्मितामात्ररूपा ज्योतिष्मतीत्यत आह—एषा द्वयीति। विधूतरजस्तमोमलास्मितैव सत्त्वमयी ज्योतिरिति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलमाह ययेति॥ ३६॥

वीतरागविषयं वा चित्तम् ॥ ३७ ॥

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति ॥३७॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

स्वप्नज्ञानालम्बनं वा निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३८ ॥

यथाभिमतध्यानाद्वा ॥ ३९ ॥

यदेवाभिमतं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति। स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य। एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतीघातः स परो वशीकारः। तद्वशीकारात्परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ४० ॥

---

वीतरागविषयं वा चित्तम्। वीतरागाः कृष्णद्वैपायनप्रभृतयस्तेषां चित्तं तदेवालम्बनं तेनोपरक्तमिति ॥ ३७ ॥

स्वप्ननिद्राज्ञानालम्बनं वा। यदा खल्वयं स्वप्ने विविक्तवनसंनिवेशवर्तिनीमुत्कीर्णामिव चन्द्रमण्डलात्कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेतामभिजातचन्द्रकान्तमणिमयीमतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवतो महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानालम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते। निद्रा चेह सात्त्विकी ग्रहीतव्या। यस्याः प्रबुद्धस्य सुखमहमस्वाप्समिति प्रत्यवमर्शो भवति। एकाग्रं हि तस्यां मनो भवति। तावन्मात्रेण चोक्तम्—एतदेव ब्रह्मविदो ब्रह्मणो रूपमुदाहरन्ति सुप्तावस्थेति। ज्ञानं च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३८ ॥

यथाभिमतध्यानाद्वा। किं बहुना यदेवभिमतं तत्तवतारूपमिति ॥ ३९॥

कथं पुनः स्थितिपदमात्मीभावोऽवगन्तव्य इत्यत आह—परमाणुपरममहत्त्वान्तोऽस्य वशीकारः। व्याचष्टे—सूक्ष्म इति। उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—एवं तामुभयीमिति। वशीकारस्यावान्तरफलमाह—तद्वशीकारादिति ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः किंस्वरूपा किंविषया वा समापत्तिरिति ? तदुच्यते—

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः । अभिजातस्येव मणेरिति दृष्टान्तोपादानम् । यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते। तथा भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति। तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति। तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति।

तथा ग्रहणेष्वपीन्द्रियेषु द्रष्टव्यम्। ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते। तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुष-

---

तदेवं चित्तस्थितेरुपाया दर्शिताः। लब्धस्थितिकस्य चित्तस्य वशीकारोऽपि दर्शितः। संप्रति लब्धस्थितिकस्य चेतसः किंविषयः किंरूपश्च संप्रज्ञातो भवतीति पृच्छति—अथेति । अत्रोत्तरसूत्रमवतारयति—तदुच्यत इति। सूत्रं पठति—क्षीणवृत्तेरित्यादि समापत्त्यन्तम्। तद्व्याचष्टे—क्षीणेति । अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य । तस्य व्याख्यानं-प्रत्यस्तमितप्रत्ययस्येति। तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्यामभिभव उक्तः। दृष्टान्तं स्पष्टयति—यथेति। उपाश्रय उपाधिर्जपाकुसुमादिः । उपरक्तस्तच्छायापन्नः। उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाकारस्तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति—तदा ग्राह्येति। ग्राह्यं च तदालम्बनं च तेनोपरक्तं तदनुविद्धम्। तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति । आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं ग्राह्यतामिव प्राप्तमिति यावत् । अतो ग्राह्यस्वरूपाकारेण निर्भासते । ग्राह्योपरागमेव सूक्ष्मस्थूलताभ्यां विभजते—भूतसूक्ष्मेति। विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः । तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ ।

तथा ग्रहणेष्वपीन्द्रियेष्विति। गृह्यन्त एभिरर्था इति ग्रहणानीन्द्रियाणि। एतदेव स्पष्टयति—ग्रहणालम्बनेति। ग्रहणं चालम्बनं च तदिति ग्रहणालम्बनम्। तेनोपरक्तमनुविद्धमात्मीयमन्तःकरणरूपमपिधाय ग्रहणमिव बहिष्करणमिवापन्नमिति । तदनेनानन्दानुगतमुक्त्वाऽस्मितानुगतमाह—तथा ग्रहीतृपुरुषेति। अस्मितास्पदं हि ग्रहीता पुरुष इति भावः । पुरुषत्वाविशेषादने-

समापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते। तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासत इति। तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता—तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते ॥ ४१ ॥

तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥

तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टम्। विभज्यमानाश्चाऽन्ये शब्दधर्मा अन्येऽर्थधर्मा अन्ये ज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः। तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्तते सा संकीर्णा समापत्तिः सवितर्केत्युच्यते ॥ ४२ ॥

---

नैव मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह—तथा मुक्तेति। उपसंहरंस्तत्स्थतदञ्जनतापदं व्याचष्टे—तदेवमिति। तेषु ग्रहीतृग्रहणग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य चित्तसत्त्वस्य या तदञ्जनता तदाकारता सा समापत्तिः संप्रज्ञातलक्षणो योग उच्यते। तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नादर्तव्यः। एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासो नादरणीय इति सर्वं रमणीयम् ॥ ४१ ॥

सामान्यतः समापत्तिरुक्ता। सेयमवान्तरभेदाच्चतुर्विधा भवति। तद्यथा सवितर्का निर्वितर्का सविचारा निर्विचारा चेति। तत्र सवितर्कायाः समापत्तेर्लक्षणमाह—तत्रेत्यादि समापत्यन्तं सूत्रम्। तत्र तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रतिपत्तव्या। कीदृशी? शब्दश्चार्थश्च ज्ञानं च तेषां विकल्पाः। वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्विकल्पोऽप्येकस्मिन्भेदमादर्शयति भिन्नेषु चाभेदम्, तेन शब्दार्थज्ञानविकल्पैः संकीर्णा व्यामिश्रेत्यर्थः। तद्यथा गौरिति शब्द इति। गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः। गौरित्यर्थ इति। गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पो दर्शितः। गौरिति ज्ञानमिति। गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पः। तदेवमविभागेन विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके द्रष्टव्यम्। यद्यविभागेन ग्रहणं कुतस्तर्हि विभाग इत्यत आह—विभज्यमानाश्चेति। विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परीक्षकैरन्ये शब्दधर्मा ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्माः, अन्येऽर्थस्य जडत्वमूर्तत्वादयः, अन्ये प्रकाशमूर्तिविरहादयो ज्ञानस्य धर्मा इति। तस्मादेतेषां विभक्तः पन्थाः स्वरूपभेदोन्नयनमार्गः। तत्र विकल्पिते गवाद्यर्थे समापन्नस्येति। तदनेन योगिनोऽपरं प्रत्यक्षमुक्तम्। शेषं सुगमम् ॥ ४२ ॥

यदा पुनः शब्दसंकेतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते सा च निर्वितर्का समापत्तिः। तत्परं प्रत्यक्षम्। तच्च श्रुतानुमानयोर्बीजम्। ततः श्रुतानुमाने प्रभवतः। न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनम्। तस्मादसंकीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति। निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥४३॥**

या शब्दसंकेतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञास्वरूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा निर्वितर्का समापत्तिः। तथा च व्याख्यातम्।

---

सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां व्याचष्टे—यदा पुनरिति। परिशुद्धिरपनयः। शब्दसंकेतस्मरणपूर्वे खल्वागमानुमाने प्रवर्तेते। संकेतश्चायं गौरिति शब्दार्थज्ञानानामितरेतराध्यासात्मा। ततश्चागमानुमानज्ञानविकल्पौ भवतः। तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का। यदा पुनरर्थमात्रप्रवणेन चेतसार्थमात्राहतेन तदभ्यासान्नान्तरीयकतामुपगता संकेतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव न तु विकल्पितेनाकारेण परिच्छिद्यते, सा निर्वितर्का समापत्तिरिति। तद्योगिनां परं प्रत्यक्षमसदारोपगन्धस्याप्यभावात्। स्यादेतत्—परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपदिशन्त्युपपादयन्ति च। कथं चातद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यत उत्पाद्यते च। तस्मादागमानुमाने तद्विषये ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह—तच्च श्रुतेति। यदि हि सवितर्कमिव श्रुतानुमानसहभूतं तदनुषक्तं स्याद्भवेत्संकीर्णम्। तयोस्तु बीजमेवैतत्। ततो हि श्रुतानुमाने प्रभवतः। न च यद्यस्य कारणं तत्तद्विषयं भवति। न हि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयम्। तस्मादविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्प्योपदिशन्ति चोपपादयन्ति च। उपसंहरति—तस्मादिति। व्याख्येयं सूत्रं योजयति—निर्वितर्काया इति। स्मृतिपरिशुद्धावित्यादि सूत्रम्। शब्दसंकेतश्च श्रुतं चानुमानं च तेषां ज्ञानमेव विकल्पस्तस्मात्स्मृतिस्तस्याः परिशुद्धिरपगमस्तस्याम्। अत्र च संकेतस्मृतिपरिशुद्धिर्हेतुः। श्रुतादिज्ञानस्मृतिपरिशुद्धिश्च हेतुमती। अनुमानशब्दश्च कर्मसाधनोऽनुमेयवाचकः। स्वमिवेतीवकारो भिन्नक्रमस्त्यक्त्वेतिपदानन्तरं द्रष्टव्यः।

तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः। स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः, फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति, धर्मान्तरस्य कपालादेरुदये च तिरोभवति। स एष धर्मोऽवयवीत्युच्यते। योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्चानित्यश्च तेनावयविना व्यवहाराः क्रियन्ते।

---

विषयविप्रतिपत्तिं निराकरोति—तस्या एकेति। एकां बुद्धिमुपक्रमत आरभत इत्येकबुद्ध्युपक्रमः। तदनेन परमाणवो नानात्मानो न निर्वितर्कविषया इत्युक्तं भवति। योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वायोगात्। अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः प्रतिभासधर्मः स्थौल्यमित्यत आह— अर्थात्मेति। नासति बाधके स्थूलमनुभवसिद्धं शक्यापह्नवमिति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्त इति तान्प्रत्याह—अणुप्रचयेति। अणूनां प्रचयः स्थूलरूपपरिणामः। स च विशिष्यतेऽन्यस्मात्परिणामान्तरात्। स एवात्मा स्वरूपं यस्य स तथोक्तः। गवादिर्भोगायतनम्। घटादिर्विषयः। तच्चैतदुभयमपि लोक्यतइति लोकः। नन्वेष भूतसूक्ष्मेभ्यो भिन्नोऽभिन्नो वा स्यात्। भिन्नश्चेत्कथं तदाश्रयः कथं च तदाकारः। न हि घटः पटादन्यस्तदाकारस्तदाश्रयो वा। अभिन्नश्चेत्तद्वदेव सूक्ष्मोऽसाधारणश्च स्यादत आह—स चेति। अयमभिप्रायः—नैकान्ततः परमाणुभ्यो भिन्नो घटादिरभिन्नो वा। भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः। अभिन्नत्वे धर्मिरूपवत्तदनुपपत्तेः। तस्मात्कथञ्चिद्भिन्नः कथञ्चिदभिन्नश्चास्थेयः। तथा च सर्वमुपपद्यते। भूतसूक्ष्माणामिति षष्ठ्या कथंचिद्भेदं सूचयति। आत्मभूत इति चाभेदम्। फलेन व्यक्तेन तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः। कारणाभेदेन च कारणाकारतोपपन्नेत्याह—स्वव्यञ्जकाञ्जन इति। स किं तदात्मभूतो धर्मो नित्यो नेत्याह—धर्मान्तर इति। धर्मान्तरस्य कपालादेरुदय इत्यर्थः। तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति—स एष इति। परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक इति। न केवलमनुभवादपि तु व्यवहारतोऽपि तन्निबन्धनत्वाल्लोकयात्राया इत्याह—तेनेति।

स्यादेतत्—असति बाधकेऽनुभवोऽवयविनं व्यवस्थापयेत्। अस्ति च बाधकं यत्सत्तत्सर्वमनवयवं यथा विज्ञानम्। सच्च गोघटादीति स्वभावहेतुः। सत्त्वं हि विरुद्धधर्मसंसर्गरहितत्वेन व्याप्तम्। तद्विरुद्धश्च विरुद्धधर्मसंसर्गः सावयव उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या सत्त्वमपि निवर्तयति। अस्ति चावयविनि

यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्य मविकल्पस्य तस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति।

तदा च सम्यग्ज्ञानमपि किं स्याद्विषयाभावात्। यद्यदुपलभ्यते तत्तदवयवित्वेनाघ्रातम्। तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयो भवति॥ ४३॥

---

तद्देशत्वाऽतद्देशत्वावृतत्वानावृतत्वरक्तत्वारक्तत्वचलत्वाचलत्वलक्षणो विरुद्धधर्मसंसर्ग इत्यत आह—यस्य पुनरिति। अयमभिप्रायः—अनुभवसिद्धं सत्त्वं हेतुः क्रियते यत्किल पांशुलपादुको हालिकोऽपि प्रतिपद्यतेऽन्यद्वानुभवसिद्धात्। तत्रान्यदसिद्धत्वादहेतुः। अनुभवसिद्धं तु घटादीनां सत्त्वमर्थक्रियाकारित्वरूपं न स्थूलादन्यत्। सोऽयं हेतुः स्थूलत्वमपाकुर्वन्नात्मानमेव व्याहन्ति। ननु न स्थूलत्वमेव सत्त्वम्। अपि त्वसतो व्यावृत्तिः। अस्थौल्यव्यावृत्तिश्च स्थौल्यम्। व्यावर्त्यभेदाच्च व्यावृत्तयो भिद्यन्ते। अतः स्थौल्याभावेऽपि न सत्त्वव्याहतिः, अन्यत्वात्। भवतु वा व्यावृत्तिभेदादवसायविषयभेदः। यत्पूर्वकास्त्ववसायास्तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान्। रूपपरमाणवो निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेद्, हन्तैते गन्धरसस्पर्शपरमाणुभिरन्तरिता न निरन्तराः। तस्मादन्तरालाग्रह एकघनवनप्रत्ययवत्परमाण्वालम्बनः सन्नयं विकल्पो मिथ्येति तत्प्रभवा विकल्पा न पारम्पर्येणापि वस्तुप्रतिबद्धा इति कुतस्तदवसितस्य सत्त्वस्यानवयवत्वसाधकत्वम्। तस्मादविकल्पकस्य प्रत्यक्षस्य प्रामाण्यमिच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्वमविकल्पावसेयमकामयताप्यभ्युपेयम्। तथा च तद्बाधमानं सत्त्वमात्मानमेवापबाधेत। परमसूक्ष्माः परमाणवो विजातीयपरमाण्वनन्तरिता अनुभवविषया इति व्याहतमङ्गीकरणम्। तदिदमुक्तं—यस्य पुनरवस्तुकः स प्रचयविशेषो निर्विकल्पस्य विषयः। सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषया इत्यत आह—सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्येति। तस्यावयव्यभावाद्धेतोरतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति लक्षणेन सर्वमेव प्राप्तं मिथ्याज्ञानं यत्स्थौल्यालम्बनं यच्च तदधिष्ठानसत्त्वालम्बनमित्यर्थः। नन्वेतावतापि न ज्ञानमात्मनि मिथ्या भवति तस्यावयवित्वेनाप्रकाशादित्यत आह—प्रायेणेति।

ननु किमेतावतापीत्यत आह—तदा चेति। सत्त्वादिज्ञानं चेन्मिथ्या तदा सत्त्वादिहेतुकमनवयवित्वादिज्ञानमपि मिथ्यैव। तस्यापि हि निर्विकल्पगोचरस्थूलमेवावसेयतया विषयः, स च नास्तीति तात्पर्यार्थः। विषयाभाव एव कुत इत्यत आह—यद्यदिति। विरोधश्च परिणामवैचित्र्येण भेदाभेदेन चोक्तोपपत्त्य

## एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥

तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते।

या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते। एवं स्वरूपं हि तद्भूतसूक्ष्ममेतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति।

---

नुसारेणोद्धर्तव्य इति सर्वं रमणीयम् ॥ ४३ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। अभिव्यक्तो घटादिर्धर्मो यैस्ते तथोक्ताः। घटादिधर्मोपगृहीता इति यावत्। देश उपर्यधःपार्श्वादिः। कालो वर्तमानः। निमित्तं पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः। एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः। एवं तैजसस्य गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानभ्यस्त्रिभ्यः। एवं वायवीयस्य गन्धादितन्मात्ररहिताभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्। एवं नाभसस्य शब्दतन्मात्रादेवैकस्मात्। तदिदं निमित्तं भूतसूक्ष्माणाम्। एतेषां देशकालनिमित्तानामनुभवः, तेनावच्छिन्नेषु। नानुभूतविशेषणा विशेष्ये बुद्धिरुपजायत इत्यर्थः। ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह—तत्रापीति। पार्थिवो हि परमाणुः पञ्चतन्मात्रप्रचयात्मैकबुद्धिनिर्ग्राह्यः। एवमाप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्या। उदितो वर्तमानो धर्मस्तेन विशिष्टम्। एतावता चात्र संकेतस्मृत्यागमानुमानविकल्पानुवेधः सूचितः। न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते, अपि त्वागमानुमानाभ्याम्। तस्मादुपपन्नमस्याः संकीर्णत्वमिति।

निर्विचारामाह—या पुनरिति। सर्वथा सर्वेण नीलपीतादिना प्रकारेण। सर्वत इति हि सार्वविभक्तिकस्तसिः। सर्वैर्देशकालनिमित्तानुभवैरित्यर्थः। तदनेन स्वरूपेण कालानवच्छेदः परमाणूनामिति दर्शितम्। नापि तदारब्धधर्मद्वारेणेत्याह—शान्तेति। शान्ता अतीता उदिता वर्तमाना अव्यपदेश्या भविष्यन्तो धर्मास्तैरनवच्छिन्नेषु। नन्वनवच्छिन्ना धर्मैः परमाणवः किमसंबद्धा एव तैरित्यत आह—सर्वधर्मानुपातिष्विति। कतमेन संबन्धेन धर्माननुपतन्ति परमाणव इत्यत आह—सर्वधर्मात्मकेषु। कथंचिद्भेदः कथंचिदभेदो धर्माणां परमाणुभ्य इत्य-

प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते। तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मवस्तुविषया सविचारा निर्विचारा च। एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति ॥४४॥

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रम्, तैजसस्य रूपतन्मात्रम्, वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रमिति। तेषामहंकारः। अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः। लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः। न चालिङ्गात्परं सूक्ष्ममस्ति। नन्वस्ति पुरुषः सूक्ष्म इति? सत्यम्। यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य। किं तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति, हेतुस्तु भवतीति। अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

ता एव सबीजः समाधिः ॥ ४६ ॥

ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः।

---

र्थः। कस्मात्पुनरियं समापत्तिरेतद्विषयेत्यत आह—**एवंस्वरूपं हीति**। वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्तत इत्यर्थः।

विषयमभिधायास्याः स्वरूपमाह—**प्रज्ञा चेति**। संकलय्य स्वरूपभेदोपयोगिविषयमाह—**तत्रेति**। उपसंहरति—**एवमिति**। उभयोरात्मनश्च निर्विचारायाश्चेति ॥ ४४ ॥

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते? न। किंतु—**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्**। पार्थिवस्य परमाणोः संबन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः। एवमुत्तरत्रापि योज्यम्। लिङ्गमात्रं महत्तत्त्वं तद्धि लयं गच्छति प्रधान इति। अलिंगं प्रधान तद्धि न क्वचिल्लयं गच्छतीत्यर्थः। अलिंगपर्यवसानत्वमाह—**न चालिङ्गात्परमिति**। चोदयति—**ननु इति**। पुरुषोऽपि सूक्ष्मो नालिङ्गमेवेत्यर्थः। परिहरति—**सत्यमिति**। उपादानतया सौक्ष्म्यमलिङ्ग एव नान्यत्रेत्यर्थः। तत्र पुरुषार्थनिमित्तत्वान्महदहंकारादेः पुरुषोऽपि कारणमलिङ्गवदिति। कुत एवंलक्षणमलिङ्गस्यैव सौक्ष्म्यमित्याशयवान्पृच्छति—**किं त्विति**। उत्तरमाह—**लिङ्गस्येति**। सत्यं कारणं न तूपादानम्। यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस्तद्धेतुरपीत्यर्थः। उपसंहरति—**अतः प्रधान एवं सौक्ष्म्यं निरतिशयं व्याख्यातम्** ॥ ४५ ॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां संप्रज्ञातत्वमाह—**ता एव सबीजः समाधिः**। एवकारो भिन्नक्रमः सबीज इत्यस्यानन्तरं द्रष्टव्यः। ततश्चतस्रः

तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्धोपसंख्यातः समाधिरिति ॥ ४६ ॥

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादो भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः । तथा चोक्तम्—

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥ ४७ ॥
( तुल० शान्ति० १७।२० )

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

तस्मिन्समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति । अन्वर्था च सा, सत्यमेव बिभर्ति । न च तत्र विपर्यासज्ञानगन्धोऽप्यस्तीति । तथा चोक्तम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ इति ॥ ४८ ॥

---

समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते । सबीजता त्वनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते। तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्र इत्यष्टौ सिद्धा भवन्तीति । निगदव्याख्यातं भाष्यम् ॥ ४६ ॥

चतसृष्वपि समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वमाह—निर्विचारवैशारद्येऽध्यात्मप्रसादः । वैशारद्यपदार्थमाह—अशुद्धीति । रजस्तमसोरुपचयोऽशुद्धिः सैवावरणलक्षणो मलस्तस्मादपेतस्य प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिसत्त्वस्य। अतएवानभिभूत इति। स्यादेतत्—ग्राह्यविषया चेत्समापत्तिः कथमात्मविषयः प्रसाद इत्यत आह—भूतार्थविषय इति । नात्मविषयः किं तु तदाधार इत्यर्थः। क्रमाननुरोधी । युगपदित्यर्थः। अत्रैव परामर्षी गाथामुदाहरति—तथा चेति । ज्ञानालोकप्रकर्षेणात्मानं सर्वेषामुपरि पश्यन्दुःखत्रयपरीताञ्शोचतो जनाञ्जानाति ॥ ४७ ॥

अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिमाह—ऋतंभरा तत्र प्रज्ञा । सुगमं भाष्यम्। आगमेनेति वेदविहितं श्रवणमुक्तम्। अनुमानेनेति मननम् । ध्यानं चिन्ता । तत्राभ्यासः पौनःपुन्येनानुष्ठानम्। तस्मिन्रस आदरः । तदनेन निदिध्यासनमुक्तम् ॥ ४८ ॥

सा पुनः—

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

श्रुतमागमविज्ञानं तत्सामान्यविषयम्। न ह्यागमेन शक्यो विशेषोऽभिधातुम्। कस्मात्? न हि विशेषेण कृतसंकेतः शब्द इति। तथानुमानं सामान्यविषयमेव। यत्र प्राप्तिस्तत्र गतिर्यत्र न प्राप्तिस्तत्र न गतिरित्युक्तम् (द्र० २।७ भाष्य)। अनुमानेन च सामान्येनोपसंहारः। तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति।

न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणमस्ति। न चास्य विशेषस्याप्रमाणकस्याभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति—भूतसूक्ष्मगतो वा पुरुषगतो वा। तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति ॥ ४९ ॥

---

स्यादेतत्—आगमानुमानगृहीतार्थविषयीभावनाप्रकर्षलब्धजन्मा निर्विचारागमानुमानविषयमेव गोचरयेत्। न खल्वन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुमतिप्रसङ्गात्। तस्मान्निर्विचारा चेदृतंभरागमानुमानयोरपि तत्प्रसङ्ग इत्यत आह—श्रुतानुमानेत्यादि। बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थमपि तमसावृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति। यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्द्योतते तदास्यातिपतितसमस्तमानमेयसीम्नः प्रकाशानन्त्ये सति किं नाम यन्न गोचर इति भावः। व्याचष्टे—श्रुतमागमविज्ञानं तत्सामान्यविषयम् इति। कस्मात्? न ह्यागमेन शक्यो विशेषोऽभिधातुम्। कुतः? यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसंकेतः शब्दः। यस्मादस्य विशेषेण सह न वाच्यवाचकसंबन्धः प्रतीयते। न च वाक्यार्थेऽपीदृशो विशेषः संभवति। अनुमानेऽपि लिङ्गलिङ्गिसंबन्धग्रहणाधीनजन्मनि गतीरेषैवेत्याह—तथानुमानमिति। यत्र प्राप्तिरित्यत्र यत्रतत्रशब्दयोः स्थानपरिवर्तनेन व्याप्यव्यापकभावोऽवगमयितव्यः। अतोऽत्रानुमानेन सामान्येनोपसंहारः। उपसंहरति—तस्मादिति।

अस्तु तर्हि संबन्धग्रहानपेक्षं लोकप्रत्यक्षं न तत्सामान्यविषयमित्यत आह—न चास्येत्यादि। मा भूत्संबन्धग्रहाधीनं लोकप्रत्यक्षम्, इन्द्रियाधीनं तु भवत्येव। न चेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः। ननु च यद्यागमानुमानप्रत्यक्षागोचरो विशेषस्तर्हि नास्ति, प्रमाणविरहादित्यत आह—न चेति। न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य येन तन्निवृत्तौ निवर्तेत। नो खलु कलावतश्चन्द्रस्य परभागवर्तिहरिणसद्भावं प्रति न संदिहते प्रामाणिका

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते—

**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥**

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते। व्युत्थानसंस्काराभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति। प्रत्ययनिरोधे समाधिरुपतिष्ठते। ततः समाधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो जायते। ततश्च प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्काराशयश्चित्तं साधिकारं न करिष्यतीति। न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति। चित्तं हि ते स्वकार्यादवसादयन्ति। ख्यातिपर्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

---

इत्यर्थः। इति तस्मात्। समाधिप्रज्ञानिर्ग्राह्य एवेति। अत्र च विवादाध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनो द्रव्यत्वे सति परस्परं व्यावर्तमानत्वाद्, ये द्रव्यत्वे सति परस्परं व्यावर्तन्ते ते प्रातिस्विकविशेषशालिनो यथा खण्डमुण्डादय इत्यनुमानेनागमेन च ऋतंभरप्रज्ञोपदेशपरेण, यद्यपि विशेषो निरूप्यते तदनिरूपणे संशयः स्यान्न्यायप्राप्तत्वात्तथाप्यदूरविप्रकर्षेण तत्सत्त्वं कथंचिद्गोचरयतः श्रुतानुमाने। न तु साक्षाच्चार्थमिव समुच्चयादिपदानि लिङ्गसंख्यायोगितया। तस्मात्सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति ॥४९॥

स्यादेतत्—भवतु परमार्थविषयः संप्रज्ञातो यथोक्तोपायाभ्यासात्। अनादिना तु व्युत्थानसंस्कारेण निरूढनिबिडतया प्रतिबन्धनीया समाधिप्रज्ञा सा वात्यावर्तमध्यवर्तिप्रदीपपरमाणुरिवेति शङ्कामपनेतुं सूत्रमवतारयति—**समाधिप्रज्ञेति**। सूत्रं पठति—**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी**। तदिति निर्विचारां समापत्तिं परामृशति। अन्येति व्युत्थानमाह। भूतार्थपक्षपातो हि धियां स्वभावस्तावदेवेयमनवस्थिता भ्राम्यति न यावत्तत्त्वं प्रतिलभते। तत्प्रतिलम्भे तत्र स्थितपदा सती संस्कारबुद्धिः संस्कारबुद्धिचक्रक्रमेणावर्तमानानादिमप्येतत् तत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति। तथा च बाह्या अप्याहुः—

> "निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
> न बाधोऽनादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः॥" इति।

स्यादेतत्—समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः। समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकल इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति—**कथमसाविति**। परिहरति—**न त इति**। चित्तस्य हि कार्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति। तत्र क्लेकर्माशयसहितं शब्दाद्युपभोगे प्रवर्तते। प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु

किं चास्य भवति—

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

स न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्मात्? निरोधजः संस्कारः समाधिजान्संस्कारान्बाधत इति।

निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनु-

---

चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्यम्। तस्मात्समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत्परिपन्थिन इति। स्वकार्याद्भोगलक्षणादवसादयन्ति, असमर्थं कुर्वन्तीत्यर्थः। कस्मात्ख्यातिपर्यवसानं हि चित्तचेष्टितम्। तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति। संजातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः ॥५०॥

तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम्। पृच्छति—किं चेति। किं चास्य भवति प्रज्ञासंस्कारवच्चित्तं प्रज्ञाप्रवाहजनकतया तथैव साधिकारमित्यधिकारापनुत्तयेऽन्यदपि किंचिदपेक्षणीयमस्तीत्यर्थः। सूत्रेणोत्तरमाह—तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधो, न केवलं प्रज्ञाया इत्यपिशब्दार्थः। सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात्कारणाभावेन कार्यानुत्पादात्सोऽयं निर्बीजः समाधिः। व्याचष्टे—स निर्बीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्यादुपजायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति। ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधताम्। संस्कारं त्वविज्ञानरूपं कथं बाधते। दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थे स्मृतिरित्याशयवान्पृच्छति—कस्मादिति। उत्तरं—निरोधज इति। निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यम्। ततो जातो निरोधजः संस्कारः। संस्कारादेव दीर्घकालनैरन्तर्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो न तु विज्ञानादित्यर्थः।

स्यादेतत्—निरोधजसंस्कारसद्भावे किं प्रमाणम्। स हि प्रत्यक्षेण वानुभूयेत, स्मृत्या वा कार्येणानुमीयेत। नच सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनः। नापि स्मृतिः। तस्य वृत्तिमात्रनिरोधतया स्मृतिजनकत्वासंभवादित्यत आह—निरोधेति। निरोधस्थितिश्चित्तस्य निरुद्धावस्थेत्यर्थः। तस्याः कालक्रमो मुहूर्तार्धयामयामाहोरात्रादिस्तदनुभवेन। एतदुक्तं भवति—वैराग्याभ्यासप्रकर्षानुरोधी

मेयम्। व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते, तस्मात्ते संस्काराश्चित्तस्याधिकार-विरोधिनो न स्थितिहेतवो, यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्तते, तस्मिन्निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठोऽतः शुद्धः केवलो मुक्त इत्युच्यत इति ॥ ५१ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे श्रीमद्व्यासभाष्ये

प्रथमः समाधिपादः ॥ १ ॥

---

निरोधप्रकर्षो मुहूर्तार्धयामादिव्यापितयानुभूयते योगिना । न च परवैराग्यक्षणाः क्रमनियततया परस्परमसंभवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्तु-मीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः । ननूच्छिद्यन्तां प्रज्ञासंस्काराः । निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते । अनुच्छेदे वा साधिकारत्वमेवेत्यत आह—व्युत्थानेति । व्युत्थानं च तस्य निरोधसमाधिश्च संप्रज्ञातस्तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्यर्थः । व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्यु-त्थानप्रज्ञासंस्कारवत् । निरोधसंस्कारस्तु प्रत्युदित एवास्ते चित्ते । निरोधसं-स्कारे सत्यपि चित्तमनधिकारवत् । पुरुषार्थजनकं हि चित्तं साधिकारं शब्दा-द्युपभोगविवेकख्याती च तथा पुरुषार्थौ । संस्कारशेषतायां तु न बुद्धेः प्रति-संवेदी पुरुष इति नासौ पुरुषार्थः । विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम्, अपि तु क्लेशवासिततयेत्याशयवानाह—यस्मादिति । शेषं सुगमम् ॥५१॥

योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम् ।
योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः ॥ १ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां

तत्त्ववैशारद्यां प्रथमः समाधिपादः ॥ १ ॥

वाचस्पतिकृतटीकायुतव्यासभाष्यसमेतम् ।

# पातञ्जलयोगसूत्रम्

## तत्र साधनपादः द्वितीयः

उद्दिष्टः समाहितचित्तस्य योगः । कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते—

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

नातपस्विनो योगः सिध्यति । अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपः संभेदमापद्यत इति तपस उपादानम् । तच्च चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते ।

---

ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलो योग उक्तस्तत्किमपरमवशिष्यते यदर्थं द्वितीयः पादः प्रारभ्येतेत्यत आह—उद्दिष्ट इति । अभ्यासवैराग्ये हि योगोपायौ प्रथमे पाद उक्तौ । न च तौ व्युत्थितचित्तस्य द्रागित्येव संभवत इति द्वितीयपादोपदेश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थम् । ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति । समाहितत्वमविक्षिप्तत्वम् । कथं व्युत्थानचित्तोऽप्युपदेक्ष्यमाणैरुपायैर्युक्तः सन् योगी स्यादित्यर्थः । तत्र वक्ष्यमाणेषु नियमेष्वाकृष्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुपदिशति सूत्रकारः—तपःस्वाध्यायेत्यादि । क्रियैव योगः क्रियायोगो योगसाधनत्वात् । अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे—

"योगयुक्प्रथमं योगी युञ्जमानोऽभिधीयते ।" ( ६।७।३३ )

इत्युपक्रम्य तपःस्वाध्यायादयो दर्शिताः। व्यतिरेकमुखेन तपस उपायत्वमाह—नातपस्विन इति । तपसोऽवान्तरव्यापारमुपायतोपयोगिनं दर्शयति—अनादीति । अनादिभ्यां कर्मक्लेशवासनाभ्यां चित्रात एव प्रत्युपस्थितमुपनतं विषयजालं यस्यां सा तथोक्ता । अशुद्धी रजस्तमःसमुद्रेको नान्तरेण तपः संभेदमापद्यते । सान्द्रस्य नितान्तविरलता संभेदः । ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपाय इत्यत आह—तच्चेति । तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्येतेत्यर्थः ।

स्वाध्यायः प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणं तत्फलसंन्यासो वा ॥ १ ॥

स हि क्रियायोगः—

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

स ह्यासेव्यमानः समाधिं भावयति क्लेशांश्च प्रतनूकरोति। प्रतनूकृतान्क्लेशान्प्रसंख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति, तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २ ॥

अथ के क्लेशाः कियन्तो वेति ?

**अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥**

---

प्रणवादयः पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारायणादयः। परमगुरुर्भगवानीश्वरस्तस्मिन्। यत्रेदमुक्तम्—

"कामतोऽकामतो वापि यत्करोमि शुभाशुभम्।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥" इति।

तत्फलसंन्यासो वा। फलानभिसंधानेन कार्यकरणम्। यत्रेदमुक्तम्—

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ (भ. गी. २।४७) इति ॥१॥

तस्य प्रयोजनाभिधानाय सूत्रमवतारयति—स हीति। सूत्रं—समाधिभावनार्थः क्लेशतनूकरणार्थश्च। ननु क्रियायोग एव चेत्क्लेशान्प्रतनूकरोति कृतं तर्हि प्रसंख्यानेनेत्यत आह—प्रतनूकृतानीति। क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु बन्ध्यत्वे क्लेशानाम्। प्रसंख्यानस्य तु तद्बन्ध्यत्वे। दग्धबीजकल्पानिति बन्ध्यत्वेन दग्धकलमबीजसारूप्यमुक्तम्। स्यादेतत्—प्रसंख्यानमेव चेत्क्लेशानप्रसवधर्मिणः करिष्यति, कृतमेषां प्रतनूकरणेनेत्यत आह—तेषामिति। क्लेशानामतानवे हि बलवद्विरोधिग्रस्ता सत्त्वपुरुषान्यताख्यातिरुदेतुमेव नोत्सहते प्रागेव तद्बन्ध्यभावं कर्तुम्। प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुपजायते। उपजाता च तैरपरामृष्टानभिभूता नैव यावत्परामृश्यत इति। सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा। अतीन्द्रियतया सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा प्रतिप्रसवाय प्रविलयाय कल्पिष्यते। कुतः ? यतः समाप्ताधिकारा समाप्तोऽधिकारः कार्यारम्भणं गुणानां यथा हेतुभूतया सा तथोक्तेति ॥ २ ॥

पृच्छति—अथेति। अविद्येति सूत्रेण परिहारः। अविद्यास्मितारागद्वेषा-

क्लेशा इति पञ्च विपर्यया इत्यर्थः। ते स्यन्दमाना गुणाधिकारं द्रढयन्ति, परिणाममवस्थापयन्ति, कार्यकारणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्रीभूत्वा कर्मविपाकं चाभिनिर्हरन्तीति ॥ ३ ॥

**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥**

अत्राविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्विधविकल्पानां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः? चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः, तस्य प्रबोध आलम्बने संमुखीभावः। प्रसंख्यानवतो दग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धबीजस्य कुतः प्ररोह इति, अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते। तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति। सतां क्लेशानां तदा बीजसामर्थ्यं

---

भिनिवेशाः पञ्चक्लेशाः। व्याचष्टे—पञ्च विपर्यया इति। अविद्या तावद्विपर्यय एव। अस्मितादयोऽप्यविद्योपादानास्तदविनाभाववर्तिन इति विपर्ययाः। ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः। तेषामुच्छेत्तव्यताहेतुं संसारकारणत्वमाह—ते इति। स्यन्दमानाः समुदाचरन्तो **गुणानामधिकारं द्रढयन्ति** बलवन्तं कुर्वन्त्यत एव **परिणाममवस्थापयन्ति** अव्यक्तमहदहंकारपरम्परया हि **कार्यकारणस्रोत उन्नमयन्त्युद्भावयन्ति**। यदर्थं सर्वमेतत्कुर्वन्ति तद्दर्शयति—**परस्परेति**। कर्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थस्तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति। किं प्रत्येकं निष्पादयन्ति, नेत्याह—**परस्परानुग्रहेति**। कर्मभिः क्लेशाः क्लेशैश्च कर्माणीति ॥ ३ ॥

हेयानां क्लेशानामविद्यामूलत्वं दर्शयति—**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्**। तत्र का प्रसुप्तिरिति। स्वोचितामर्थक्रियामकुर्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यप्यभिप्रायः पृच्छतः। उत्तरमाह—**चेतसीति**। मा नामार्थक्रियां कार्षुः क्लेशा विदेहप्रकृतिलयानाम्, बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि। न हि विवेकख्यातेरन्यदस्ति कारणं तद्बन्ध्यतायाम्। अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावत्तदवधिकालं प्राप्नुवन्ति। तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखीभवन्ति। शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः। तदनेनोत्पत्तिशक्तिरुक्ता। बीजभावोपगम इति च कार्यशक्तिरिति। ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह—**प्रसंख्यानवत इति**। **चरमदेहः**, न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयास्य देहः पूर्व इत्यर्थः। **नान्यत्र**। विदेहादिष्वित्यर्थः। ननु सतो नात्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसंमुखीभावे

न्तराण्युत्पद्यन्ते । तदास्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति । कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति । क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान्विमुक्तो भवति । कस्मात् ? यस्माद्विपर्ययो भवस्य कारणम् । न हि क्षीणविपर्ययः कश्चित्केनचित्क्वचिज्जातो दृश्यत इति ॥ ३० ॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति । आवरकेण तमसाभिभूतमावृतमनन्तं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति । तत्र यदा सर्वैरावरणमलैरपगतं भवति तदा भवत्यस्यानन्त्यम् । ज्ञानस्यानन्त्याज्ज्ञेयमल्पं संपद्यते; यथा—आकाशे खद्योतः । यत्रेदमुक्तम्—

---

विवेकख्यातिर्भवति । तथा च तं निरोद्धुं पारयतीति ॥ २९ ॥

तस्य च प्रयोजनमाह—ततः क्लेशकर्मनिवृत्तिः । कस्मात्पुनर्जीवन्नेव विद्वान्विमुक्तो भवति । उत्तरं—यस्मादिति—क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम् । न चासति निदाने निदानी भवितुमर्हति । यथाहात्र भगवानक्षपादः—वीतरागजन्मादर्शनात् (न्यायसू० ३।१।२५) इति ॥ ३० ॥

अथैवं धर्ममेघे सति कीदृशं चित्तमित्यत आह—तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् । आव्रियते चित्तसत्त्वमेभिरित्यावरणानि मलाः क्लेशकर्माणि । सर्वे च त आवरणमलाश्चेति सर्वावरणमलाः । तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायतेऽनेनेत्यनया व्युत्पत्त्या, आनन्त्यादपरिमेयत्वाज्ज्ञेयमल्पम् । यथा हि शरदि घनपटलमुक्तस्य चण्डार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात्प्रकाश्या घटादयोऽल्पाः प्रकाशन्त एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति । तदेतदाह—सर्वैरिति । एतदेव व्यतिरेकमुखेन स्फोरयति—आवरकेण तमसाभिभूतमिति । क्रियाशीलेन रजसा प्रवर्तितमत एवोद्घाटितम् । प्रदेशादपनीतं तम इत्यर्थः । अत एव सर्वान्धर्माञ्ज्ञेयान्मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते । नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः । अथ सत्यप्यस्मिन्कस्मान्न जायते पुनर्जन्तुरित्यत आह—यत्रेदमुक्तमिति । कारणसमुच्छेदादपि चेत्कार्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः । तथा चानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्याद्-

अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् ।
अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् ॥ इति ॥ ३१ ॥
( तुल० तै० आ० १।११।५ )

## ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते । न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति ?

## क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥

क्षणानन्तर्यात्मा परिणामस्यापरान्तेनावसानेन गृह्यते क्रमः । न ह्यननुभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्यान्ते भवति । नित्येषु च क्रमो दृष्टः ।

द्वयी चेयं नित्यता—कूटस्थनित्यता परिणामिनित्यता च । तत्र कूटस्थ-

---

अविध्यदन्धो मणिमिति । आवयद् ग्रथितवान् । प्रत्यमुञ्चत्पिनद्धवान् । अभ्यपूजयत्स्तुतवानिति ॥ ३१ ॥

ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्कारान्सक्लेशकर्माशयान् । गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह— ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् । शीलमिदं गुणानां यदमी यं प्रति कृतार्थास्तं प्रति न प्रवर्तन्त इति भावः ॥ ३२ ॥

अत्रान्तरे परिणामक्रमं पृच्छति—अथ कोऽयमिति । क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः । परिणामक्रमः क्षणप्रतियोगी, क्षणः प्रतिसंबन्धी यस्य स तथोक्तः, क्षणप्रचयाश्रय इत्यर्थः । न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुम् । न चैकस्यैव क्षणस्य क्रमः । तस्मात्क्षणप्रचयाश्रयः परिशिष्यते । तदिदमाह—क्षणानन्तर्यात्मेति । परिणामक्रमे प्रमाणमाह—परिणामस्येति । नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते । सोऽयं परिणामस्यापरान्तः पर्यवसानम् । तेन हि परिणामस्य क्रमः । ततः प्रागपि पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरस्थूलतमत्वादीनां पौर्वापर्यमनुमीयते । एतदेव व्यतिरेकमुखेन दर्शयति—न हीति । अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता । नन्वेष क्रमः प्रधानस्य न संभवति, तस्य नित्यत्वादित्यत आह—नित्येषु चेति । बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते ।

तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति—

नित्यता पुरुषस्य । परिणामिनित्यता गुणानाम् । यस्मिन्परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम् । उभयस्य च तत्त्वानभिघातान्नित्यत्वम् । तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानो, नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः । कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित इति ।

अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्तमानस्यास्ति क्रमसमाप्तिर्न वेति ? अवचनीयमेतत् । कथम् ? अस्ति प्रश्न एकान्तवचनीयः— सर्वो जातो मरिष्यति इति ? ॐ भो इति ।

अथ सर्वो मृत्वा जनिष्यत इति ? विभज्य वचनीयमेतत् । प्रत्युदित-

---

द्वयीति । ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यम् , परिणामि सदैव स्वरूपाच्च्यवमानं कथं नित्यमित्यत आह—यस्मिन्निति । धर्मलक्षणावस्थानामुदयव्ययधर्मत्वम्, धर्मिणस्तु तत्त्वादविघात एवेति । अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य, नेत्याह—तत्र गुणधर्मेषु बुद्ध्यादिष्विति । यतो लब्धपर्यवसानो धर्माणां विनाशात् । प्रधानस्य तु परिणामक्रमो न लब्धपर्यवसानः । ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः; पुरुषस्य त्वपरिणामिनः कुतः परिणामक्रम इत्यत आह—कूटस्थेति । तत्र बद्धानां चित्ताव्यतिरेकाभिमानात्तत्परिणामेन परिणामाध्यासः । मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः, शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपादत्त इति ।

गुणेष्वलब्धपर्यवसानः परिणामक्रम इत्युक्तम् । तदसहमानः पृच्छति— अथेति । स्थित्येति । महाप्रलयावस्थायाम् । गत्येति । सृष्टौ । एतदुक्तं भवति— यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य, हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत, कथं च सृष्ट्यादौ सहसोत्पद्येत संसारः ? तस्मादेकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारस्य क्रमेणेति प्रधानपरिणामक्रमपरिसमाप्तिः । एवं च प्रधानस्याप्यनित्यत्वप्रसङ्गः । न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात् , तथा सत्यनादित्वव्याहतेः सकलशास्त्रार्थभङ्गप्रसङ्ग इति भावः । उत्तरमाह—अवचनीयमनुत्तरार्हमेतत् । एकान्तत एव तस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति—अस्ति प्रश्न इति । सर्वो जातो मरिष्यतीति प्रश्नः । उत्तरम्—ॐ भो इति । सत्यं भो इत्यर्थः ।

अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह—अथ सर्व इति ।

ख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते। तथा मनुष्य-जातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति। अयं त्ववचनीयः प्रश्नः—संसारोऽयमन्तवानथानन्त इति। कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येत्यन्यतरावधारणेऽदोषः। तस्माद्व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तम्। तत्स्वरूपमवधार्यते—

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मकानां

---

विभज्य वचनीयतामाह—विभज्येति। विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह—तथा मनुष्येति। अयं त्ववचनीय एकान्ततः। न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुम्, यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नैकान्ततः शक्यमवधारयितुम्। यथा जातमात्रस्य मरणमेकान्तः। विभज्य पुनः शक्यावधारणमित्याह—कुशलस्येति। अयमभिसंधिः—क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानम्। तच्चागमसिद्धमोक्षाश्रयम्। तथा चाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः कथं तमेवागमं प्रधानविकारनित्यतायामप्रमाणी कुर्यात्? तस्मादागमबाधितविषयमेतदनुमानं न प्रमाणम्। श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वमनन्तत्वं चेति। अपि च सर्वेषामेवात्मनां संसारस्य न तावद्युगपदुच्छेदः संभवी। न हि पण्डितरूपाणामप्यनेकजन्मपरम्पराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा, किं पुनः प्राणभृन्मात्रस्य स्थावरजङ्गमादेरेकदाऽकस्माद्भवितुमर्हति। न च कारणायौगपद्ये कार्ययौगपद्यं युज्यते। क्रमेण तु विवेकख्यातावसंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदोऽनन्तत्वाज्जन्तूनामसंख्येयत्वादिति सर्वमवदातम् ॥ ३३ ॥

कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावान्तरसंगतिमाह—गुणाधिकारेति। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति। कृतकरणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयस्तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्ग इति। योऽयं गुणानां

गुणानां तत्कैवल्यं, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात्पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे व्यासभाष्ये
कैवल्यपादश्चतुर्थः ॥ ४ ॥

---

कार्यकारणात्मकानां प्रतिसर्गस्तत्कैवल्यम्, यं कञ्चित्पुरुषं प्रति प्रधानस्य मोक्षः। स्वरूपप्रतिष्ठा वा पुरुषस्य मोक्ष इत्याह—स्वरूपेति। अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिः। न चासौ मोक्ष इत्यत आह—पुनरिति। सौत्र इतिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं परलोकमेयशसिद्धयो धर्मघनः समाधिः।
द्वयी च मुक्तिः प्रतिपादितास्मिन्पादे प्रसङ्गादपि चान्यदुक्तम् ॥ १ ॥

निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि।
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां
तत्त्ववैशारद्यां कैवल्यपादश्चतुर्थः ॥ ४ ॥

समाप्तमिदं पातञ्जलयोगदर्शनं सटीकभाष्ययुतम् ॥

# पातञ्जलयोगसूत्रभाष्यानुक्रमणी

अस्यां सूचौ योगसूत्रभाष्यगतानि सर्वाणि विशिष्टानि पदानि संकलितानि वर्णानुक्रमेण, सूत्रभाष्यगताः सर्वे विषया अवान्तरविषयाश्चापि संकलिता यथासंभवम् ।

वर्णक्रमविषय इदं ज्ञातव्यं यद् अनुस्वारविसर्गौ अव्यवहितपूर्वस्वरान्तर्गतौ इत्यभ्युपेतमस्माभिः । दृष्टिरियं व्याकरणानुगृहीतेति दृश्यते । आदौ अज्घटिताः ततश्चानुस्वारविसर्गघटिताः शब्दांशाः स्थापिता अत्र । अनया रीत्या हसेतिशब्दानन्तरमेव हंसेतिशब्द इह द्रष्टव्यः । सन्ति च शंकरादयः अनुस्वारघटिताः शब्दाः, ये पञ्चमवर्णघटिता अपि साधवः । प्रायेणैतादृशाः शब्दा अनुस्वारघटिता इहोपात्ताः । गङ्गापरम्परादिशब्दाः खलु सर्वथा पञ्चमवर्णघटिता एव ।

अस्यां सूचौ तत्त्ववैशारदीगता विशिष्टा विषया न संकलिताः, ते च यथास्थानं द्रष्टव्याः ।

यत्र बहून्याकरस्थलानि निर्दिष्टानि, तत्र अध्यायसूत्रसंख्यापौर्वापर्यक्रमो न सर्वत्र आस्थितः । विशेषदर्शिभिः सर्वाणि आकरस्थलानि द्रष्टव्यानि । निर्दिष्टाकरस्थलेषु क्वचिद् गौणरूपेणापि विषयस्य विवेचनं कृतमिति विज्ञेयम् ।

सूच्यां ये शब्दा उपात्ताः, ते क्वचिल्लक्षितशब्दानामंशभूता एव । यथा 'अन्यताप्रत्यये'ति शब्देन अन्यताप्रत्ययमात्राधिकारशब्दोऽत्र लक्षितः, तथैव अप्रसवशब्देन अप्रसवसमर्थानीति पदं लक्षितम् । क्वचिच्च नञ्घटितशब्देषु नञं परित्यज्य मूलभूताः शब्दा एवेह संकलिताः, यथा इह सूच्याम् आभोगपदं वर्तते ( १।१५ ), योगभाष्ये पुनरनाभोग इति ।

योगभाष्य-व्याख्यानग्रन्थेषु क्वचित् सूत्रस्य भाष्यस्य च पाठभेदो दृष्टः । यथा सुखानुशयीत्यत्र सुखानुजन्मेति योगभाष्यविवरणे ( २।७ ) दृश्यते । अत्र तत्त्ववैशारदीसंमतः सूत्रभाष्यपाठ एव गृहीतः ।

अर्थबोधसौकर्यार्थं क्वचित् संकलितशब्दानन्तरं विशिष्टं नामादि प्रदत्तम् । तच्च कोष्ठके लिखितम् । मतानामुल्लेखस्तु व्याख्यानुसारेणैव कृतः न पुनः स्वमनीषिकया ।

आदौ मूलभूतपदानि, तदनन्तरं च समस्तपदानीत्येव क्रम आस्थितः, यथा 'इन्द्रियम्' इति पदानन्तरमेव इन्द्रियजय इति पदमिह उपात्तम्, ( वर्णक्रमदृष्ट्या तु 'इन्द्रियम्' इति पदम् 'इन्द्रियजय' इति पदानन्तरमेव स्यात्, तदिह न स्वीकृतम् ) ।

अकर्मण्यता १।३०
अकल्पिता ३।४३
अकुसीद ४।२९
अक्रमम् ३।५४
अक्लिष्टा वृत्तिः १।५
अगस्त्यकृतसमुद्रपानम् ४।१०
अगोष्पदम् २।५
अङ्गमेजयत्वम् १।३१
अणिमादिप्रादुर्भावः ३।४५
अणुः ३।२६;३।४५
अणुप्रचयविशेषात्मा १।४३
अणुमात्रम् १।३६
अणिमादिसिद्धयः ३।४५
अतद्रूप-प्रतिष्ठं ज्ञानम् १।८
अतिक्रान्तभावनीयः ३।५१
अतिप्रसङ्गः ४।२१
अतिशयः २।१५
अतीतलक्षणम् ३।१३
अतीतानागतज्ञानम् ३।१६
अतीतानागतव्यवहारः ४।१२
अदर्शनम् २।२३–२४, ३।५५
अदृष्टजन्मवेदनीयं कर्म २।१२–१३
अधरभूमिः ३।६
अधिकारः १।१९,१।५०–५१,२।२३,२।२७
अधिकारसमाप्तिहेतुः ४।२८
अधिमात्रोपायः १।२१–२२
अधिष्ठातृत्वम् ३।४९
अध्ययनम् २।३२
अध्यात्मप्रसादः १।४७
अध्यासः ३।१७
अध्वभेदः ४।१२
अनन्तरभूमिः ३।६
अनन्तसमापत्तिः २।४७
अनन्ता ( चितिशक्तिः ) १।२
अनवस्थितत्वम् १।३०
अनष्टं ( दृश्यम् ) २।२२
अनाकुलम् ( चित्तम् ) १।२०
अनागतम् २।१६, ३।१३, ४।१२
अनादि १।२४, २।१७, २।२२
अनादिकालः २।१३
अनादित्वम् ४।१०
अनादिवासना २।१५, ४।१०
अनादिसंयोगः २।२२
अनाभोगः १।१५
अनावरणम् ३।४१
अनाशयं ( सिद्धचित्तम् ) ४।६
अनित्ये नित्यख्यातिः २।५
अनियत-विपाकः २।१३
अनिवृत्तमिथ्याज्ञाना २।२९
अनिष्टप्रसंगः ३।५१
अनुकारः २।२०, २।५४
अनुकारिमात्रता ४।२२
अनुगुणवासनाभिव्यक्तिः ४।८
अनुग्रहः १।२५, २।३, २।५
अनुत्तमः ( सुखलाभः ) २।४२
अनुत्पत्तिधर्मा पुरुषः १।६
अनुपश्यः २।२०
अनुपाती १।९, ३।१४
अनुभवः २।९,२।१५,२।१७
अनुमानम् १।७,१।४९
अनुमितः २।१८,३।१४
अनुवादः ३।१७
अनुशयी २।७–८
अनुशासनम् १।१

अनुसंहारबुद्धिः ३।१७
अन्तःकरणधर्माः १।२, २।१८
अन्तरङ्गम् ३।७
अन्तरायः १।२६–३०, २।३२
अन्तर्धानम् ३।२१
अन्धतामिस्रः ( क्लेशनरकौ ) १।८, ३।२६
अन्यतानवच्छेदः ३।५३
अन्यताप्रत्ययः ३।५३, ३।५५
अन्यत्वकारणम् २।२८
अन्वयः ( इन्द्रियरूपः ) ३।४७
अन्वयः ( भूतरूपः ) ३।४४
अपरान्तज्ञानम् ३।२२
अपरिग्रहः २।३०
अपरिग्रहस्थैर्यम् २।३९
अपरिणामिनी चित् १।२
अपरिदृष्टचित्तधर्मः ३।१५, ३।१८
अपवर्गः २।१८, २।२१, २।२३
अपवर्गभागीयं कर्म ४।१२
अपवादः २।१३
अपानः ३।३९
अपोहः २।१८
अप् ( भूतम् ) २।१९
अप्रकाशम् ४।१९
अप्रतिघातः १।४०
अप्रतिपत्तिः २।५५
अप्रतिबुद्धः २।५
अप्रतिसङ्क्रमा ( चित् ) १।२,२।२०,४।२२
अप्रधानम् २।२३
अप्रमत्तः ३।६
अप्रयोजकम् ४।३
अप्रसवः २।२, २।३५, ३।५०
अप्सरसः ३।२६, ३।५१
अबन्ध्यवीर्याणि ३।२३
अभयप्रदानम् २।३३
अभावः ( अदर्शनस्य ) २।२५
अभाव-प्रत्ययः १।१०
अभावितस्मर्त्तव्या १।११
अभिज्ञानम् ३।१४
अभिध्यानम् १।२३
अभिनिवेशः २।९
अभिभवप्रादुर्भावौ ३।९, ३।१३
अभिभाव्य-अभिभावकत्वम् ( गुणानाम् २।१५, २।१८
अभिव्यक्तधर्मकाः १।४४
अभिव्यक्तिः २।२८, ३।१३–१४
अभिव्यक्तिः ( वासनायाः ) ४।८
अभिव्यक्तिकारणम् २।२८
अभ्यासः १।१२, १।१३, १।१८
अमरः ३।२६
अमरस्थानम् ३।५१
अमित्रः २।५
अमूर्तः ३।४१
अमृतः २।५
अमृतभोगः २।३२
अयस्कान्तमणिः १।४, २।१७–१८, ४।१७
अयुतसिद्धावयवः ३।४४; ३।४७
अयोगि-कर्म ४।७
अरिष्टानि ३।२२
अर्थः १।२८, १।४२, ३।१७, ३।३५, ४।३४
अर्थकृतः ( संयोगः ) २।१७
अर्थतत्वम् १।३५
अर्थधर्माः १।४२
अर्थप्रत्ययः २।५
अर्थमात्रनिर्भासम् ( भासा ) १।४३, ३।३

अर्थवती ३।१७
अर्थवत्त्वम् ( इन्द्रियात्मकम् ) ३।४७
अर्थवत्वम् ( भूतात्मकम् ) ३।४४
अर्थवान् ४।२४
अर्थसंकेतः ३।१७
अर्थात्मा: १।४३
अलब्धपर्यवसानः ४।३३
अलब्धभूमिकत्वम् १।३०
अलिंगम् १।४५, २।१९
अल्पायुः २।३४
अवकाशदानम् ३।४२
अवचनीयम् ४।३३
अवच्छेदः १।२६, ३।५३
अवधारणम् २।१८, ४।२०-२१
अवयवः ३।२६
अवयवी १।४३
अवर्णम् ( पदम् ) ३।१७
अवलम्बनम् १।३२, ४।१५
अवसिताधिकारः १।५, १।५१, ४।११
अवस्तुकः १।४३
अवस्था-परिणामः २।१९, ३।१३, ३।१५
अविद्या १।८, १।११, २।४-५, २।१५,
२।२३-२४, ४।११
अविद्या ( क्लेशः ) २।४, २।५, २।२४
अविद्या ( संयोगहेतुः ) २।२४
अविप्लवा ( विवेकख्यातिः ) २।२६
अविरतिः १।३०
अविवेकविषयः १।१२
अविशेषः २।१९, ३।३५, ४।३
अविषयीभूतम् ३।२०, ३।५४, ४।१६
अवीचिः ३।२६
अवैराग्यम् १।२
अव्यक्तम् १।१६, २।५, २।१९
अव्यपदेश्यम् १।४४, ३।१४
अव्यसनम् २।५५
अशुक्लाकृष्णं (कर्म) ४।७
अशुचिः २।५
अशुद्धिः २।२
अशुद्धिक्षयः २।२८, २।४३
अशुद्ध्यावरणमलम् १।४७, २।२७, २।४३
अशोच्यः १।४७
अश्वः ३।१७
अष्टौ योगाङ्गानि २।२९
असंगः ३।३९
असत् ४।१२
असम्प्रज्ञातः १।२, १।११, १।१८, १।२०
असम्प्रमोषः १।११
असुरः ३।२६, ४।१
अस्तिक्रिया ४।३३
अस्तित्वम् १।५१
अस्तेयम् २।३०
अस्तेयप्रतिष्ठा २।३७
अस्पृहा २।३०
अस्मि १।३६, ४।२७
अस्मिता ( इन्द्रियात्मिका ) ३।४७
अस्मिता ( एकात्मिका संवित् ) १।१७
अस्मिता ( क्लेशः ) २।६
अस्मितामात्रम् ( ०मात्रः ) १।३६, १।१७
२।१९, ४।४
अस्मितामात्र-ध्यानसुखाः ३।२६
अस्मिता-मात्रा ( विशोका ) १।३६
अहम् १।१०, १।३२, २।२४, २।३३
३।५१, ४।१९, ४।२५
अहंकारः १।४५, २।१५, ३।४७

अहिंसा २।३०
अहिंसा-फलम् २।३५
आकारः १।११, १।३८, २।६, ३।१७, ४।२२
आकारमौनम् २।३२
आकाशम् २।१६, ३।४१–४२, ३।४४, ४।१६
आकाशकल्पम् ( बुद्धिसत्त्वम् ) १।३६
आकाशगतिः ३।४२
आख्यातम् ३।१७
आख्यानम् ३।१८
आगमः १।७, १।२५, २।९
आगमविज्ञानम् १।४६
आगमिनः १।२७
आचार्यः ४।१०
आचार्यदेशीयः २।२४
आत्मकम् १।४३, २।१४, २।१७-१८
आत्मख्यातिः २।५
आत्मख्या नम् २।२३
आत्मत्वम् २।५, ३।४६
आत्मदर्शनयोग्यता २।४१
आत्मबुद्धिः २।६
आत्मभाव-भावना ४।२५
आत्मस्वरूपम् ४।१६
आत्मा २।११
आत्माशीः २।६, ४।१०
आत्यन्तिकः २।१७, २।२५, ३।५०
आदर्शसिद्धिः ३।३६
आदिमत् ( लिङ्गम् ) ३।१३
आदिविद्वान् १।२५
आधिदैविकम् १।३१, ३।२२
आधिभौतिकम् १।३१, ३।२२
आध्यात्मिकम् १।३१, ३।२२, ४।१०,
आनन्दः १।१७
आनन्दानुगतः १।१
आनुश्रविकविषयः १।१५
आप्तः १।७
आभास्वराः ३।२६
आभोगः १।१५, १।१७
आभ्यन्तरवृत्तिः ( प्राणायामः ) २।५०-५१
आभ्यन्तरशौचम् २।३२
आस्रवणम् ३।४४
आयुः २।१३, २।३४, ३।२२
आरोग्यम् २।१५
आलम्बनम् ३।२०, १।१७
आलम्बनम् ( वासनायाः ) ४।११
आलस्यम् १।३०
आलोकः १।४७, ३।५, ३।२५
आवट्य-जैगीषव्य-संवादः ३।१८
आवरणम् ३।४३, ४।३
आवापगमनम् २।१३
आविर्भावः ३।११
आवृतकायः १।२४, ३।४५
आशयः १।२४, २।५, २।१२-१३, ४।६
आशीः २।६, ४।१०
आश्रयः ४।११
आसनम् २।४६
आसनजयः २।४६
आसनफलम् २।४८
आसनसिद्धिः २।४७
आसुरिः १।२५
आस्वाद-सिद्धिः ३।३६
आहारः २।२८
इक्षुरसः ३।२६

इच्छानविघातः ३।४५
इच्छाभिघातः १।३१
इतरप्रत्ययः १।१०
इतरेतराध्यासः ३।१७
इतरेतराश्रयः २।१५
इन्द्रः ( देवानामिन्द्रः ) २।१२
इन्द्रजालः २।५२
इन्द्रियम् २।१५, २।१८–१६, २।४१–४३, ३।४७,
इन्द्रियजयः ३।४७
इन्द्रियप्रणालिका १।७
इन्द्रियवश्यता २।५५
इन्द्रियसिद्धिः २।४३
इलावृत्तम् ( वर्षम् ) ३।२६
इष्टम् ३।४, ३।४२
इष्टदेवता २।४४
ईशितृत्वम् ३।४५
ईश्वरः १।२४
ईश्वर-कृतजीवानुग्रहः १।२५
ईश्वर-प्रणिधानम् १।२३, १।२६ २।१, २।३२, २।४५
ईश्वर-प्रणिधानफलम् १।३०
ईश्वरप्रसादः ३।६
ईश्वरवाचकः प्रणवः १।२७
ईश्वरसत्त्वम् १।२४
ईश्वरानुमानम् १।२५
उच्छेदवादः २।१५
उत्क्रान्तिः ३।३६
उत्तराः कुरवः ३।२६
उत्पत्तिकारणम् २।२८
उदकभूतम् २।१६
उदरम् ४।१६
उदानजयः ३।४६
उदारः ( क्लेशः ) २।४
उदितः ( धर्मः ) १।४४, ३।१२, ३।१४
उद्यानभूमिः ३।२६
उन्मार्गप्रवणवितर्कज्वरः २।३३
उपकरणम् २।३४
उपचरितभोगाभावः ३।५५
उपनिमन्त्रणम् ३।५१
उपभोक्ता १।३२
उपभोगः २।१५-१६
उपरागः १।७, ४।१५, ४।१७
उपलब्धिः २।२३
उपसर्गः ( समाधेः ) ३।३७
उपसर्जनम् १।१
उपसंहारः १।२५, १।४६
उपाध्यायः ३।६
उपाय-प्रत्ययः १।१६-२०
उपेक्षा १।३३, ३।२३
ऊर्णातन्तुः २।१५
ऊर्ध्वरेतसः ३।२६
ऊहः २।१८
ऋतम्भरप्रज्ञः ३।५१
ऋतम्भरा ( प्रज्ञा ) १।४८
ऋषिः २।४४, ४।३३
एकचन्द्रदर्शनम् १।८
एकजातिसमन्वितः ३।४४
एकतत्त्वाभ्यासः १।३२
एकतानता ३।२
एकभविकः ( कर्माशयः ) २।१३
एकविपाकः २।१३
एकसमयानवधारणम् (द्रष्टृ-दृश्ययोः) ४।२०
एकाग्रता १।३२, ३।११

एकाग्रतापरिणामः ३।१२
एकाग्रभूमिः १।१, ३।१२
ऐकाग्र्यम् २।४१
ऐश्वर्यम् १।१५, १।२४, २।३५, ३।४५
ओम् ( स्वीकारवाची ) ४।३३
ओषधिसिद्धिः ४।१, ४।६
औपपादिकदेहाः ३।२६
कण्ठकूपः ३।३०
करणपञ्चकम् ३।४८
करुणा १।३३, ३।२३
कर्म १।२४, २।१२, २।१५, २।१७,
 ४।८-१०, ४।३०
कर्मगतिः २।८३
कर्मजातिः ४।७
कर्मनिवृत्तिः ४।३०
कर्मबन्धनानि १।१
कर्मवासना ४।८-६
कर्मविपाकः २।३, २।१३, ४।८
कर्माशयः २।१२-१३, ४।६
कर्मेन्द्रियम् २।१६
कल्पद्रुमाः ३।५१
कल्पप्रलयः १।२५
कल्पसहस्रायुषः ३।२६
कविः २।१३, ४।२२
कष्टम् २।३०, ३।२६
कामभोगिनः ३।२६
कामसुखम् २।४२
कायधर्मानभिघातः ३।४५
कायरूपसंयमः ३।२१
कायव्यूहज्ञानम् ३।२६
कायसम्पत् ३।४५-४६
कायसिद्धिः २।४३
कायाकाश-सम्बन्धः ३।४२
कायेन्द्रियप्रकृतिः ४।२
कायेन्द्रिय-सिद्धिः २।४३
कारकम् ४।२०
कारणम् १।४३, २।१३, २।१६
कारणनवकम् २।२८
कारुण्यम् १।२५
कार्यकारणस्रोतः २।३
कार्यविमुक्तिः ( प्रज्ञा ) २।२७
कालः १।२६, १।४४, १।५१, २।१३,
 ३।१४, ३।५२
कालसूत्रम् ३।२६
काष्ठमौनम् २।३२
काष्ठा १।१६
किम्पुरुषवर्षम् ३।२६
कुमारः ( नन्दीश्वरः ) २।१२
कुशलः २।४, २।२२, ४।२५, ४।३३
कुसीदः ४।२६
कूटस्थनित्यता ४।३३
कूर्मनाड़ी ३।३१
कृच्छ्रचान्द्रायणम् २।३२
कृतार्थः २।२२, ४।३२
कृष्णकर्म ४।७
केवलः १।२६, १।५१, ३।१३
केवली १।२४, २।२७, ३।५५
कैवल्यम् २।२५, ३।५०, ३।५५, ४।३४
कैवल्य-प्राग्भारम् ( चित्तम् ) ४।२६
कौशलम् २।१५
क्रमः ३।१५; ३।५२
क्रमसमाप्तिः ४।३३
क्रमाननुरोधी १।४७
क्रमानुरोधी ३।१७

क्रमान्यत्वम् ३।१५
क्रिया ३।१७, ३।३६, ४।२०
क्रियाफलाश्रयत्वम् २।३६
क्रियायोगः २।१-२
क्रियाशीलम् ( दृश्यम् ) २।१८
क्रौञ्चनिषदनम् २।४६
क्लिष्टा वृत्तिः १।५
क्लेशः २।२-४, २।६, २।१३, ३।५०
क्लेशः ( विपाकसम्बद्धः ) २।१३
क्लेशकर्मनिवृत्तिः ४।३०
क्लेशक्षयहेतुः १।५०
क्लेशतनूकरणम् २।२
क्लेशमूलः ( कर्माशयः ) २।१२
क्लेशवृत्तिः २।११
क्षणः ३।१५, ३।५२, ४।३३
क्षणक्रमः ३।५२
क्षणक्रमानुरोधी २।२८
क्षणप्रतियोगी ४।३३
क्षत्रियः २।३१
क्षितिभूतम् २।१९
क्षिप्तभूमिः १।१
क्षिप्रपरिणामि २।१५
क्षीणक्लेशः २।४, ४।६
क्षुत्पिपासानिवृत्तिः ३।३०
क्षेत्रम् २।४
क्षेत्रज्ञः २।१७, ३।४९
क्षैत्रिकः ४।३
क्षोभः १।३१
ख्यातिः १।४, २।२६
ख्यातिविषयः १।५
ग-कारः ३।१७
गतिः ( अवगतिः ) १।४९
गतिसंस्कारः २।२३
गुणः ( त्रिगुणस्वभावः ) २।१८
गुणपर्वाणि २।१९
गुणरूपः ४।१३
गुणवृत्तिः २।१५
गुणसंयोगः २।२३
गुणात्मा ( धर्मः ) ४।१३
गुरुः १।२६
गोमय-पायसीय-न्यायः १।३२
ग्रहणम् ( ऐन्द्रियकम् ) ३।४७
ग्रहणम् ( चैत्तिकम् ) २।१८
ग्रहणसमापत्तिः १।४१
ग्रहीता १।४१, १।४७, २।२०
ग्राह्यम् १।४१
चतुर्थप्राणायामः २।५१
चतुर्व्यूहम् ( योगशास्त्रम् ) २।१५
चतुष्पदा अविद्या २।५
चन्द्रः ३।२७
चरमदेहः ४।७, २।४
चरमविशेषः ३।५३
चितिशक्तिः १।२, ४।२२, ४।३४
चित्तम् १।४-६, १।३२, ४।१०, ४।१५,
    ४।१९, ४।२१
चित्तधर्मः ३।१५, २।१८
चित्तनिरोधः १।२, १।१२, १।५१
चित्तनिवृत्तिः २।२४
चित्तपरार्थत्वम् ४।२४
चित्तपरिकर्म १।३३
चित्तप्रसादनम् १।३३
चित्तभूमिः १।१
चित्तमलः १।८
चित्तवशीकारः १।४०

चित्तविक्षेपः १।३०
चित्तविभुत्वम् ४।१०
चित्तविमुक्तिः ( प्रज्ञायाः ) २।२७
चित्तवृत्तिः १।५, १।६, २।९
चित्तसत्त्वम् (द्र. बुद्धिसत्त्वम्)
चित्तसर्वार्थता ४।२३
चित्तसंवित् ३।३४
चित्तान्वयः ३।६
जन्मकथन्ता-सम्बोधः २।३६
जन्मजसिद्धिः ४।१
जपः १।२८, २।४४
जम्बूद्वीपः ३।२६
जातिः २।१३, ३।५३, ४।६
जात्यन्तरपरिणामः ४।२
जिह्वाग्रः १।३५
जिह्वामध्यम् १।३५
जिह्वामूलम् १।३५
जीवनम् ३।३६
जीवन्मुक्तः २।२७, ४।३०
जुगुप्सा २।४०
जैगीषव्यः २।५५, ३।१८
ज्ञाताज्ञातम् ( वस्तु ) ४।१७
ज्ञानदीप्तिः २।२८
ज्ञानप्रसादः १।१६
ज्ञानानन्त्यम् ४।३१
ज्ञानेन्द्रियम् २।१९
ज्ञेयालयत्वम् ३।३१
ज्योतिष्मती १।३६, ३।२५
ज्वलनम् ३।४०
तत्त्वज्ञानम् २।१८
तत्स्थत्वम् ( समापत्तेः ) १।४१
तदञ्जनता ( समापत्तेः ) १।४१
तनुत्वम् (क्लेशस्य) २।२, २।४
तन्मात्रम् १।४५, २।१९, २।४४
तपः २।१, २।३२
तपःफलम् २।४३
तप्यतापकभावः २।१७
तमः ( स्थितिशीलम् ) २।१८
तापदुःखता २।१५
तामिस्रः १।८
तारकम् ३।५४
ताराः ३।२६
तारागतिज्ञानम् ३।२८
ताराव्यूहज्ञानम् ३।२७
तालु १।३५
तिर्यक् २।१२
तीव्रसंवेगः १।२१, २।१२
तुल्यप्रत्ययः ३।१२
तृष्णा २।७, २।४२ ३।१८,
तेजोभूतम् २।१९
त्रिगुणम् ( वणः ) १।२, २।१५, २।१८, ३।१८, ४।१५
त्रिदशाः ३।२६
त्रिविपाकः २।१३
दग्धक्लेशबीजम् २।४, ३।५५
दग्धबीजकल्पः २।२, २।४, २।१०-११
दर्शनम् १।४
दर्शनकार्यावसानः २।२३
दर्शनवर्जितधर्माः ३।१५, ३।१८
दर्शनशक्तिः २।६, २।२३
दर्शितविषयत्वम् १।४, २।१७, २।२३, ३।३५
दर्शितविषया ( चितिः ) १।२
दहरम् ( दहरपुण्डरीकम् ) ३।३४

दिव्यश्रोत्रम् ३।४१
दीर्घकालासेवितः ( अभ्यासः )१।१४
दीर्घप्राणायामः २।५०
दुःखम् १।३१, २।८, २।१४-१७
दुःखविपाकः २।३४
दुःखसंस्कारः २।१५
दुःखानुशयी २।८
दृक्शक्तिः २।६
दृढ़भूमिः १।१४
दृशिमात्रः २।२०
दृश्यम् १।४, २।१८, २।१९
दृश्यत्वम् १।४, ४।१९
दृश्यप्रतिलब्धिः २।१७
दृश्यस्यात्मा २।२१
दृष्टजन्मवेदनीयः ( कर्माशयः ) २।१२
दृष्टानुश्रविकविषयः १।१५
दृष्टान्तः १।४१, ३।५३, ४।१९
देवनिकायः ३।२६
देशकालनिमित्तानि १।४४, ३।१३, ३।१८
देशपरिदृष्टः प्राणायामः २।५०
देशबन्धः ३।१
दैवम् ४।८
दोषबीजक्षयः ३।५०
दौर्मनस्यम् १।३१
द्रव्यम् ३।४४, ३।४७, ३।५२, ४।१२
द्रष्टा १।३, १।४, २।१७, २।२०, ४।२३
द्रष्टृत्वं ( दृश्यत्वं च ) १।४
द्रष्टृ-दृश्यभेदः २।२०
द्रष्टृ-दृश्योपरक्तं ( चित्तम् ) ४।२३
द्वन्द्वः २।३२, २।४८
द्वीपाः ३।२६
द्वेषः २।८, २।१५, ४।११-१५
धर्मः १।६, ३।१३, ३।१४-१५, ४।१
धर्मत्वम् ३।१३
धर्मधर्मिभेदः ३।१३, ३।१५
धर्मपरिणामः ३।१३
धर्ममेघसमाधिः १।२, ४।२९
धर्माधर्मौ २।१५, ३।१८, ४।११
धर्मी ३।१३-१४
धातुः ३।२९
धातुरसकरणवैषम्यम् १।३०
धारणम् २।१८
धारणा २।५३, २।२९, ३।१
धृतिकारणम् २।२८
ध्यानम् ३।२
ध्यानाभ्यासरसः १।४८
ध्यानाहारः ३।२६
ध्येयम् ३।२–३
ध्रुवः ३।२८
ध्वनिपरिणामः ३।१७
नन्दनम् ३।२६
नन्दीश्वरः २।१२–१३, ४।३
नरकम् २।३४,३।२६
नष्टम् ( दृश्यम् ) २।२२
नहुषः २।१२–१३, ४।३
नादः ३।१७
नाभिचक्रम् ३।२९
नामाख्याते ३।१७
नारकः ( कर्म ) २।१२, ४।८
नासिकाग्रम् १।३५
नित्यता ४।१०, ४।३३
नित्यत्व-प्रतिषेधः ३।१३
निद्रा १।१०
निद्राज्ञानम् १।३८

निमित्तम् १।२४, २।१३, ४।२–३,४।६-१०
नियतविपाकः २।१३
नियमः २।१३, २।३४
नियमः ( योगाङ्गभूतः ) २।२६
निरतिशयम् ( सर्वज्ञबीजम् ) १।२५
निरन्वयम् ३।१४
निरुद्धम् (द्धः, द्धा) १।१,२।२३,३।६,४।६
निरुपक्रमं कर्म ३।२२
निरोधः (समाधि ) १।१८, १।५१, २।२७
निरोधक्षणः ३।१३
निरोधपरिणामः ३।६
निरोध संस्कारः १।१८, १।५१, ३।६-१०
निर्ग्रन्थमतम् [ द्र० भास्वतीटीका भिक्षुमते तु
सांख्यमतान्तरम् ] ४।१०
निर्बीजः १।१८, १।५१
निर्माण चित्तम् १।२५, ४।४, ४।६
निर्विचारवैशारद्यम् १।४७
निर्विचारा समापत्तिः १।४१, १।४४
निर्वितर्का समापत्ति १।४३, १।४४
निवृत्तदर्शना बुद्धिः २।२४
नैमित्तिकम् ४।६, ४।१२
न्यायः ४।२
पञ्चस्कन्धाः ४।२१
पण्डितः २।५
पतञ्जलिः ३।४४
पदम् ३।१७
पदार्थः ३।१७
पद्मासनम् २।४६
परः ( म् ) १।२, १।१६, १।४०, ४।२४
परकायः २।४०
परचित्तज्ञानम् ३।१६
परतन्त्रम् २।१७
परपीड़ा ४।७
परममहत्त्वम् १।४०
परमर्षिः १।२५
परमाणुः १।४०, ३।४२, ३।४४, ३।५२
परमात्मा १।२८
परमार्थः ३।१३, ३।१५, ३।५५,
परमा वश्यता ( इन्द्रियाणाम् ) २।५५
परवैराग्यम् १।१६, १।१८
परशरीरावेशः ३।३८
परार्थम् ४।२४
परार्थत्वम् ३।३५, २।१७
परिकर्म १।३३, १।४०
परिणामः २।१९, ३।९–१३
परिणामक्रमः ४।३२-३३
परिणामदुःखम् २।१५
परिणामान्यत्वहेतुः ३।१५
परिणामिनित्यता ४।३३
परिणामैकत्वम् ४।१४
परिदृष्टचित्तधर्मः ३।१५
परिभाषा ( तान्त्रिकी ) ३।४
परिभाषितः ३।४४
पर्यङ्कासनम् २।४६
पश्यः ( प्रत्ययानुपश्यो द्रष्टा २।२०
पाताललोकः ३।२६
पापम् २।३०
पापकः ३।१३
पापवहा ( चित्तनदी ) १।१२
पिण्डः ३।१५
पिण्डाकारः ३।१३
पुण्डरीकम् ३।३४
पुण्यकर्म २।१२-१३
पुण्यशीलः ३।२३

पुण्यापुण्यहेतुः २।१४
पुरुषः १।३-४, १।७-६, १।२६, २।२०, २।२३-२५,३।१३,४।१८,४।२३-२५
पुरुषख्यातिः १।६, २।२४
पुरुषज्ञातृत्वम् २।२०,४।१८
पुरुषदर्शनम् १।१६
पुरुषधर्मः २।२३
पुरुषप्रत्ययः ३।३५
पुरुषविशेषः १।२४
पुरुषार्थः २।१६
पूर्वजन्मानुमानम् २।६
पूर्वजातिज्ञानम् ३।१८
पूर्वसंस्कारः ४।२७-२८
पूर्वसिद्धः ( सगुणब्रह्म ) ३।४५
पृथिवी २।५, २।१८, ४।१४
पृथिवी-परमाणुः ४।१४
प्रकाशः ( अग्नेः ) ४।१६
प्रकाशशीलत्वम् ( सत्त्वम् ) २।१८, २।५२
प्रकाशावरणम् २।५२
प्रकाशावरणक्षयः ३।४३
प्रकृतिः ( करणात्मिका ) ४।२,४।३
प्रकृतिः ( तदेकत्वम् ) २।२२
प्रकृतिः ( मूला ) २।१८-१६
प्रकृति-लयाः १।१६,३।२६
प्रकृतिलीनः १।२४, १।१६
प्रकृत्यापूरः ४।२-३
प्रकृष्टसत्त्वम् १।२४
प्रख्या १।२, २।१५, ३।३५
प्रचारसंवेदनम् ३।३८
प्रचिताभः ३।२६
प्रच्छर्दनम् १।३४
प्रज्ञा १।२०, १।४८, २।२७
प्रज्ञाज्योतिः ३।५१
प्रज्ञाप्रासादः १।४७
प्रज्ञालोकः ३।५
प्रज्ञाविवेकः १।२०
प्रणवः १।२७-२८
प्रणामी ( वायुः ) ३।४४-४५
प्रणिधानम् १।२३, २।१
प्रतिघः २।८
प्रतिपक्षभावनम् २।३४
प्रतिप्रसवः २।१०
प्रतिप्रसवः ( गुणस्य ) ४।३४
प्रतिबन्धी १।५०-५१
प्रतिभा ३।५४
प्रतियोगी ४।३३
प्रतिष्ठा ३।३८, ३।४१
प्रतिसंक्रमः १।२, ४।२२
प्रतिसंवेदी १।७, १।२६, २।१७, २।२०
प्रत्यक्चेतनम् १।२६, २।२४
प्रत्यक्षम् १।७, १।३१, १।४३
प्रत्यभिज्ञानम् ३।१४
प्रत्ययः १।६, १।११, १।३२, ३।१२ ३।१७-१८, ३।३५
प्रत्ययकारणम् २।२८
प्रत्ययनिरोधः १।५०
प्रत्ययानुपश्यः २।२०
प्रत्ययाविशेषः ३।३५
प्रत्ययैकतानता ३।२
प्रत्यर्थनियतम् ( चित्तम् ) १।३२
प्रत्यवमर्शः १।१०
प्रत्याहारः २।२६, २।५४
प्रत्याहारफलम् २।५५
प्रथमकल्पिकः ३।५१

प्रधानम् २।१५, २।१६, २।२३
प्रधानकर्म २।१३
प्रधानचित्तम् २।२३
प्रधानजयः ३।४८
प्रधानवशित्वम् ३।१८
प्रधानवशी ३।२६
प्रमाणम् १।६-७
प्रमाणम् (क्लिष्टम् अक्लिष्टं च) १।५
प्रमाणोपारोही १।६
प्रमादः १।३०
प्रयत्नः १।१३, ४।११
प्रयत्नकृतम् २।५५
प्रयत्नशैथिल्यम् २।४७
प्रयोजकम् ४।३, ४।५
प्रयोजनम् १।२५, २।१८
प्रलयः १।५
प्रवादः ४।२१
प्रवाहचित्तम् १।३२
प्रविवेकः १।२६
प्रवृत्तिः १।३५, २।२३, ३।२५,
४।५, ४।१६
प्रवृत्तिकारणम् ३।१३
प्रवृत्तिभेदः ४।५
प्रवृत्त्यालोकन्यासः ३।२५
प्रशान्तवाहिता १।१३, ३।१०
प्रश्नः (द्विविधः) ४।३३
प्रश्वासः १।३१, २।४९-५०
प्रसंख्यानम् १।२, २।२, २।४, ४।२६,
प्रसादनम् १।३३, २।१
प्रसुप्तक्लेशः २।४
प्रसुप्तिः २।४
प्राकाम्यम् ३।४५
प्राजापत्यः ३।२६
प्राणः १।३१, १।३४, ३।३९
प्राणायामः १।३४, २।४९-५२
प्रातिभम् ३।३३
प्रातिभसिद्धिः ३।३६
प्रान्तभूमिः ( प्रज्ञा ) २।२७
प्राप्तिकारणम् २।२८
प्राप्तिसिद्धिः ३।४५
प्रायणकालः ३।३९
फलम् ( कर्मणः ) ३।१३
फलम् ( वासनायाः ) ४।११
फलम् ( वृत्तिबोधरूपम् ) १।७
फलक्रमानियमः २।१३
फलप्रसवः ३।१४
फलसंन्यासः ४।७
बन्धः २।१८, ३।१
बन्धकारणम् २।२४, ३।३८
बन्धनानि ( प्राकृतिकादीनि ) १।२४
बन्धनोपरमः २।२४
बन्धमोक्षौ २।१८
बलम् ( मैत्र्यादिबलानि ) ३।२३
बलम् ( हस्त्यादिबलम् ) ३।२४
बहिरकल्पिता वृत्तिः ३।४३
बहिरङ्गम् ( निर्बीजस्य ) ३।८
बाधनम् १।८
बाह्यवस्तु १।७
बाह्यवृत्तिः ( प्राणायामस्य ) २।५०
बीजभावः २।४, २।११
बुद्धिः १।११, २।६, २।२७
बुद्धितत्त्वम् २।२०
बुद्धिनिर्माणः ( कालः ) ३।५२
बुद्धिनिवृत्तिः २।२४

बुद्धिप्रतिसंवेदी ४।२१
बुद्धि-बुद्धिः ४।२१
बुद्धिबोधात्मकः १।३
बुद्धि-रूपम् २।१५
बुद्धि-वृत्तिः ।२०, ४।२२
बुद्धिसत्त्वम् ( चित्तसत्त्वम् )-१।२, १।३६, १।४७, २।४१, ३।१८, ३।४७, ३।४६, ३।५५
बुद्धिसंवित् १।३६
बुद्ध्याकारापत्तिः ४।२२
बौद्धमतप्रसंगः १।१८, १।२०; १।३२, १।४३, ३।१, ३।१३, ३।१४, ४।१४, ४।१६, ४।२०-२१, ४।२३-२४
ब्रह्म ४।२२
ब्रह्मचर्यप्रतिष्ठा २।३८
ब्रह्मपुरम् ३।३४
ब्रह्मलोकाः ३।२६
ब्राह्मणः २।३०, २।३३, ३।५१, ४।२६
भक्तिविशेषः १।२३
भगवान् १।१५, ३।१८
भद्राश्ववर्षम् ३।२६
भद्रासनम् २।४६
भवः १।१९
भवसंक्रमः १।१६
भविष्यद् २।४, ४।१२
भारतम् ३।२६
भावः ३।१३, ४।१२
भावनम् १।२८
भावना १।३३, ३।२३
भावान्यथात्वम् ३।१३
भावितस्मर्त्तव्या ( स्मृतिः ) १।११
भुवनज्ञानम् ३।२६
भूतकारणम् ३।४४
भूतग्रामः २।१५
भूतजयः ३।४४
भूततत्वम् २।१९
भूतप्रकृतिः ३।४४-४५
भूतभौतिकौ ३।४५
भूतसूक्ष्मः १।४१, १।४४, १।४५
भूतानुग्रहः १।२५
भूतार्थविषयः १।८ १।४७,
भूतेन्द्रियजयी ३।५१
भूतेन्द्रियाणि ३।१३
भूतेन्द्रियात्मकम् ( दृश्यम् ) २।१८
भूमिः (चित्तस्य योगस्य च) १।१, ३।५१
भूर्लोकः ३।२६
भैषज्यम् २।१५, २।१८
भोक्ता १।२४, २।१८
भोक्तृशक्तिः २।६, २।२०
भोगः २।६, २।१३, २।१८, २।२१, २।२३ ३।३५, ३।५१, ४।१६
भोगाभ्यासः २।१५
भोगारूढः २।१६
भोग्यत्वम् ४।१५
भोग्यशक्तिः २।६
भ्रान्तः २।३०, ४।२३
भ्रान्तिदर्शनम् १।३०
भ्रान्तिबीजम् ४।२३
मक्षिका २।५४, ३।३८
मणिः १।४१, ४।३१
मतिः ४।२१
मतिविभ्रम २।२४
मधुप्रतीकासिद्धिः ३।४८
मधुभूमिकः ३।५१

मधुमती ( भूमिः ) ३।५१, ३।५४
मनः १।१०, २।४, २।१५, २।१६, २।२८, २।३०, २।३४ ४।११, ४।१६,
मनुष्यजातिः ४।३३
मनुष्यपरिणामः २।१२
मनोजवित्वम् ३।४८
मन्त्रः २।१२, ४।१, ४।६
मन्दाकिनी ३।५१
मन्युः २।८
मरणम् २।६, २।१३, ४।१०
महत्तत्त्वम् २।१५, २।१६
महर्लोकः ३।२६
महर्षिः २।१२, ३।५१
महाप्रलयः १।२५
महामोहः १।८
महाविदेहधारणा ३।४३
महाव्रतम् २।३१
महिमा ३।४५
माया ४।१३
माहेन्द्रः ३।२६
मित्रमात्रम् २।५
मिथ्याज्ञानम् १।८
मुक्तः १।२४, १।४१, २।२७
मुदिता १।३३
मूढः १।१०
मूढभूमिः १।१
मूर्तिः ३।५३
मूर्धज्योतिः ३।३२
मूर्धा ३।१
मूलम् ३।१३
मूलवक्ता १।७
मृत्युः ३।५१
मेध्याम्यवहरणम् २।३२
मेरुपृष्ठम् ३।२६
मैत्री १।३३, ३।२३
मोक्षः २।१५, २।१८, २।२४
मोक्षकारणम् २।२३, २।२८
मोक्षप्रवृत्तिः ४।२१
मोक्षमार्गः ४।२५
मोक्षशास्त्रम् २।३२, २।१
मोहः १।८, १।११, २।३४
मौनम् २।३२
यतिः २।४०
यत्नः १।१३
यत्रकामावसायित्वम् ३।४५
यथाभिमतध्यानम् १।३६
यथाभूतार्थप्रतिपादनम् १।३५
यमः २।२६-३०
यमपुरुषः ३।२२
यमस्थैर्यम् २।३६
युक्तः ३।६, ४।१०
युतसिद्धावयवः ३।४४
योगः १।१-२, २।१, ३।६
योगधर्मः २।३३
योगपक्षः १।१
योगप्रतिपक्षाः १।३०
योगप्रदीपः ३।५१, ३।५४
योगमलः १।३०
योगाङ्गानि २।२८-२६
योगाङ्गानुष्ठानम् २।२८
योगान्तरायाः १।३०
योगिकर्म ४।७
योगिचित्तम् ३।२०
योगी २।१५, ३।२५, ३।३३, ३।४६

योग्यता २।५३
योग्यतावच्छिन्ना ( शक्तिः ) ३।१४
योजनम् ३।२६
रक्तः २।४, ३।१३
रजः २।१७, २।१८, ४।३१
रजस्तमसी १।२, ३।३५, ३।४३
रश्मिः ३।४२
रसतन्मात्रम् १।४५, २।१९
रसायनम् ३।५१, ४।१
रागः २।७
रागद्वेषौ २।५५, ४।१
रूपम् २।२८, ३।४४, ४।१३
रूपतन्मात्रम् १।४५, २।१९
रूपसंवित् १।३५
रूपातिशयाः २।१५, ३।१३
रोगः २।१५
लक्षणम् १।४३
लक्षणपरिणामः ३।१३, ३।१५
लघिमा ३।४५
लघुता ३।४२
लघुतूलसमापत्तिः ३।४२
लवणोदधिः ३।२६
लावण्यम् ३।४६
लिङ्गम् ३।१३, ३।४१
लिङ्गमात्रम् १।४५, २।१९
लोकः १।४३, ३।२५
लोकप्रत्यक्षम् १।४९
लोकसंस्थानम् ३।२६
लोभः २।७, २।१४, २।३४
लौल्यम् २।१५
वक्ता १।७
वज्रसंहननम् ३।४६
वमनम् १।३४
वर्णाः ( उच्चारितः ) ३।१७
वर्तमानः २।१६, ३।१३
वर्तमानभावः ३।१५
वर्षम् ३।२६
वशित्वम् ३।४५
वशीकारः ( चित्तस्य ) १।४०
वशीकारसंज्ञा ( वैराग्यम् ) १।१५
वश्यता २।५५
वस्तु ४।१०-१२, ४।१४-१६
वस्तुपतितः ३।५२
वस्तुप्रत्यभिज्ञानम् ३।१४
वस्तुरूपम् ४।१६
वस्तुशून्यः १।९, ३।५२
वस्तुसतत्त्वम् २।५
वस्तुसमाहारः ३।५२
वस्तुसाम्यम् ४।१५
वस्तुस्वरूपम् ४।१४
वाक् २।२६, २।३०
वाक्यवृत्तिः ३।१७
वाचकत्वम् १।२७-२८
वाच्यवाचकत्वम् १।२७
वातपित्तश्लेष्माणः ३।२९
वान्तावलेही २।३३
वायुः ३।४४-४५, २।१९
वायुबलः ३।२४
वार्तासिद्धिः ३।३६
वार्षगण्यः ३।५३
वासना २।९, २।१२, २।१५, २।२४, ३।१८, ४।८
वासनानन्तर्यम् ४।९
वासनानादित्वम् २।१३, ४।१०, ४।२४

वासनाफलम् ४।११
वासनाभिव्यक्तिः ४।८
वासनाया अभावः ४।११
वासनालम्बनम् ४।११
वासनाश्रयः ४।११
वासनाहेतुः ४।११
विकरणभावः ३।४८
विकल्पः १।९, १।४२-४३
विकल्पः ( क्लिष्टोऽक्लिष्टश्च) १।६
विकल्पज्ञानबलम् ४।१४
विकारनित्यत्वम् २।२३
विकारसंज्ञा ३।१३
विक्षिप्तचित्रम् १।३१-३२
विक्षिप्तभूमिः १।१
विक्षेपः १।३०-३२
विक्षेपसहभूः १।३१
विचारः १।१७
विचारानुगतः १।१
विच्छिन्नक्लेशः २।४
विज्ञानम् ( चैत्तिकम् ) १।३०, ३।३४
विज्ञानधर्मः १।४२
विज्ञानविसहचरः ४।१४
वितर्क ( समाधिः ) १।१७
वितर्काः २।३३-३४
वितृष्णा १।१५
विदेहधारणा कल्पिता ३।४३
विदेहलयः १।१९, ३।२६
विद्या १।१४, २।४-५
विद्याविपरीतम् २।५
विधारणम् १।३४
विनाशः ४।१२
विनियोगः ३।६
विनेयः २।३८
विन्ध्यः १।७
विपर्ययज्ञानम् २।२४
विपर्ययः १।६, १।८
विपर्यासगन्धः १।४८
विपाकः १।२४, २।१३, ४।८
विपाकहेतुः ३।१८
वियोगः २।२३
वियोगकारणम् २।२८
विरामप्रत्ययः १।१८
विवेकख्यातिः १।२, २।२६, २।२८
विवेकच्छिद्रः ४।२७
विवेकजज्ञानम् ३।४९, ३।५२, ३।५४
विवेकनिम्नम् ( चित्तम् ) ४।२६
विशेषः १।२२, २।१९,
विशेषः ( धर्मः ) १।७, ३।४४, ३।४७
विशेषदर्शनम् ४।२५
विशेषप्रतिपत्तिः १।२५
विशेषणापरामृष्टः ( पुरुषः ) २।२०
विशोका १।३६
विशोका सिद्धिः ३।४९
विषयः १।४३, १।४५, २।२०, २।५०, ४।१४, ४।१८
विषयवती प्रवृत्तिः १।३५
विषयवती विशोका १।३६
वीतराग-विषयं चित्तम् १।३७
वीरासनम् २।४६
वीर्यम् १।२०, २।३८
वृत्तिः १।५-६, १।१०, ३।४३, ३।४७, ४।१०
वृत्तिनिरोधः १।२

वृत्तिसंस्कारचक्रम् १।५
वृत्तिसारूप्यम् १।३-४
वृन्दारकः ३।२६
वेदनासिद्धिः ३।३६
वैजयन्तः ३।२६
वैनतेयबलम् ३।२४
वैनाशिकः ४।२१, ४।२४
वैरत्यागः २।३५
वैराग्यम् १।१२, १।१५-१८
वैशारद्यम् १।४७
वैश्वरूप्यम् ३।१७
व्यक्तः ( धर्मः ) २।५, ४।१३
व्यवधिः १।७, ३।५३
व्यवसायः ३।४७, ३।४६
व्यवसेयः २।१८
व्याधिः १।३०
व्यानः ३।३६
व्युत्थानम् १।३, १।५०-५१, ३।१०, ३।१३
व्युत्थानकालिका सिद्धिः ३।३७
व्युत्थानसंस्कारः ३।६
व्युत्थितचित्तम् २।१
व्रतम् २।३०, २।३२
शक्तिः ३।१४, ३।१५, ३।२१
शब्दः ( उच्चारितः ) १।४२-४३, ३।१७, ४।१४
शब्दज्ञानम् १।६
शब्दज्ञानानुपाती १।६, ३।५२
शब्दतत्त्वम् ३।४१
शब्दतन्मात्रम् १।४५, २।१६
शब्दसंवित् १।३५
शब्दार्थौ १।४२, ४।१६
शरीरम् २।२८, ३।४४
शान्तः १।४४, ३।१२, ३।१४, ३।४९
शाल्मलः ३।२६
शाश्वतवादः २।१५
शास्त्रम् १।२४, १।३५, २।१५
शास्त्रानुशासनम् ४।१३
शास्त्रोत्कर्षः १।२४
शिरःकपालः ३।३२
शीतोष्णे २।३२, २।४८
शुक्लकर्म २।१३, ४।७
शुचिः २।५
शुद्धः १।२६, २।२०, ३।३५, ४।२५
शुद्धा ( चितिः ) १।२
शुद्धिः ( बुद्धिपुरुषयोः ) ३।५५
शौचम् २।३२
शौचप्रतिष्ठा २।४०-४१
श्रद्धा १।२०, १।३५
श्रद्धेयवचनम् ४।१४
श्रावणसिद्धिः ३।३६
श्रुतम् १।४३, १।४६
श्रोत्रम् २।१६, ३।१७, ४।१४
श्रोत्राकाशसम्बन्धः ३।४१
श्वासः १।३१, २।४६-५०
षडरं संसार-चक्रम् ४।११
षण्डकोपाख्यानम् २।२४
षोडशकः २।१६
संकरः ( शब्दार्थज्ञानानाम् ) ३।१७
संकेतबुद्धिः ३।१७
संकल्पः ३।४५
संकल्पसिद्धिः ४।१
संकेतः १।२७, ३।१७
संख्यापरिदृष्टः २।५०
सङ्गः ( स्थानिभिः सह ) ३।५१

सङ्गः ३।४४
संज्ञा १।४८
संज्ञादिविशेषप्रतिपत्तिः १।२५
सत्ता ३।१७
सत्तामात्र आत्मा २।१६
सत्त्वम् २।२, २।२६, २।३५
सत्त्वतप्यता २।१७
सत्त्वशुद्धिः २।४१, ३।५५
सत्यम् १।४५, १।४८, २।३०
सत्यप्रतिष्ठा २।३६
सत्यसंकल्पता ३।४५
सत्याभः ३।२६
सदाज्ञाता २।२०, ४।१८
सन्तोषः २।३२
सन्तोषफलम् २।४२
सन्तोषसुखम् ३।१८
सन्निधिमात्रोपकारित्वम् १।४, २।१७-१८
संप्रज्ञातः १।१७
संप्रयोगः २।४४, २।५५, ३।२१
सबीजः ( समाधिः ) १।४६
समयः २।३१
समयसंस्थानम् २।४६
समाधिः १।१-२, १।११, १।१७-२०,
१।४६, १।५१, २।१६, ३।३, ३।२३
समाधिचित्तम् ३।१२
समाधिपरिणामः ३।११
समाध्युपसर्गः ३।३७
समानः ( प्राणविशेषः ) ३।३९-४०
समापत्तिः १।४१-४२
समाप्ताधिकारा ( प्रज्ञा ) २।२
समाहितचित्तम् १।२०,१।३१, २।१, ३।१२
समूहः ३।४४-४७
सम्प्रज्ञातः १।१७
सम्प्रज्ञात योगः १।१-२
सम्प्रतिपत्तिः १।२७, ३।१७
सम्प्रयोगः २।४४
सम्बन्धः १।७, १।२४, १।२७
सम्मूर्छितः २।१३
सम्यग्ज्ञानम् १।४३, २।२८
सम्यग्दर्शनम् २।१५, ४।२३
संयमः ३।४-६, ३।१७, ३।२६-२६
संयमविनियोगः ३।६
संयोगः २।१५-१७, २।२२-२३,
४।२१
संयोगनिमित्तम् २।२३
संयोगविभागधर्मा २।१८
सयोगहेतुः २।२४
सर्गः १।२६
सर्वज्ञवीजम् १।२५
सर्वज्ञातृत्वम् ३।४६
सर्वथाविषयम् ( ज्ञानम् ) ३।४५
सर्वदुःखक्षयकारणम् २।१५
सर्वभावाधिष्ठातृत्वम् ३।४६
सर्वभूतरुतज्ञानम् ३।१७
सर्वरत्नोपस्थानम् २।३७
सर्वार्थम् ( चित्तम् ) ४।२३
सर्वार्थता ३।११
सर्वविषयम् ( ज्ञानम् ) ३।५४
सविचारः १।१७, १।४६, ३।२६
सविचारा समापत्तिः १।४१–४२
सविचारा १।४४
सवितर्कः १।१७
सवितर्का समापत्तिः १।४२
सविपाकः २।५

संवेगः १।२१
संशयः १।३०
संसर्गः ३।१३
संसारः २।१५, ४।१०
संसारचक्रम् ( षडरम् ) ४।११
संस्कारः १।५, १।५०-५१, २।५, २।१५, ३।१०
संस्कारदुःखम् २।१५
संस्कारप्रतिबन्धी १।५०
संस्कारबीजक्षयः ४।२६
संस्कारशेषः १।१८
संस्कारसाक्षात्कार ३।१५
संस्कारातिशयः १।५०
संस्कारान्यथात्वम् ३।६
संस्कारोपग. १।२
संस्थानम् ३।१३
संहत्यकारित्वम् ४।२४
सांख्यपक्षः ४।१५
सांख्ययोगादयः ४।२१
साधनत्रयम् ३।८
सानन्दः १।१७
सामान्यम् १।७, १।४९, ३।१४, ३।४३–४४
साम्यम् ( सत्त्वपुरुषयोः ) ३।५५
सार्वभौममहाव्रतम् २।३१
सिद्धदर्शनम् ३।३२
सिद्धि २।३६, २।४५, ३।३७, ४।१
सिद्धिसूचकम् २।३५
सुखम् २।१४-१५, ३।३३, ४।१५, ४।२४
सुखानुशयी २।७
सुधर्मा ३।२६
सुमेरुः ३।२६
सूक्ष्मः ( धर्मः ) ४।१३
सूक्ष्मः ( प्राणयामः ) २।५०
सूक्ष्मः ( भूतरूपः ) ३।४४
सूक्ष्मः ( विषयः ) १।३५, १।४५
सूक्ष्मक्लेशः २।१०
सूत्रम् ( आचार्यवचनम् ) १।२, १।४ २।२३
सूर्यद्वारम् ३।२६
सोपक्रमं कर्म ३।२२
सोपाश्रयम् २।४६
सौमनस्यम् २।४१
स्कन्धाः ( बौद्धशास्त्रीयाः ) ४।२१
स्तम्भवृत्तिः ( प्राणायामः ) २।५०
स्तेयम् २।३०
स्त्यानम् १।१०, १।३०
स्थान्युपनिमन्त्रणम् ३।५१
स्थितिः १।१३, २।१८
स्थितिकारणम् २।२८
स्थितिनिबन्धनी १।३५-३६
स्थितिप्रवाहः १।४७
स्थितिवैशारद्यम् १।३६
स्थितिशीलम् ( तमः ) २।१८
स्थितिहेतुः १।५१
स्थिरपदम् ३।३१
स्थितसुखम् २।४६
स्थूलः १।१७, १।४१, २।११, ३।४४
स्थूला वृत्तिः ( क्लेशस्य ) २।११
स्थैर्यम् ( प्रतिष्ठा ) २।३६, २।४१, ३।३१
स्मयः ३।५१
स्मृतिः १।११, १।२०
स्मृतिः ( क्लिष्टा अक्लिष्टा ) १।५
स्मृतिपरिशुद्धिः १।४३

स्मृतिसङ्करः ४।२१
स्मृतिसंस्कारौ ४।६
स्वप्नज्ञानम् १।३८
स्वबुद्धिसंवेदनम् ४।२२
स्वरसवाही ( अभिनिवेशः ) २।६
स्वरूपदर्शनम् १।२६
स्वरूपप्रतिष्ठः १।३, १।५१, २।२५, ४।३४
स्वव्यञ्जकाञ्जनम् १।११, १।४३, ३।१३, ४।६
स्वशक्तिः २।२३
स्वस्तिकम् २।४६
स्वाङ्गजुगुप्सा २।४०
स्वाध्यायः २।१, २।३२
स्वाध्यायफलम् २।४४
स्वाभासम् ( चित्तम् ) ४।१६
स्वामिशक्तिः २।२३
स्वार्थः २।२०, ४।२४
स्वार्थसंयमः ३।३५
हरिवर्षम् ३।२६
हस्तिनिषदनम् २।४६
हस्तिबलम् ३।२४
हातृस्वरूपम् २।१५
हानम् २।२५
हानोपायः २।२६
हिंसकः २।३४
हिंसा २।३०–३१, २।३४–३५
हिंसादिनिदानम् २।३०
हृदयम् ३।१, ३।३४, ३।३६,
हृदयपुण्डरीकम् १।३६
हेतुः ( वासनायाः ) ४।११
हेतुः ( संयोगस्य ) २।२४
हेतुः ( हेयस्य ) २।१७
हेतुवादः २।१५
हेयम् ( हेयाः ) २।१५–१६, २।३५
हेयहेतुः २।१७
हेयोपादेयशून्यः १।१५
ह्लादः १।१७, २।१४

---

## पुराणोक्त
# योगविद्या का अध्ययन

पुराणों में योगविद्यासम्बन्धी विपुलसामग्री मिलती है, जिस पर दार्शनिकदृष्टि से कोई विवेचना आज तक नहीं की गई है। इस साहित्य में पातञ्जलयोग, शैव–शाक्त–वैष्णव संप्रदायगत योग एवं हठयोग–राजयोग आदि योगप्रस्थानों के विवरण हैं। जिसका अपेक्षित संकलन इस ग्रन्थ में किया गया है। ग्रन्थ में उपपुराणों का भी यथोचित उपयोग किया गया है। पौराणिक विवरण की तुलना दर्शन शास्त्रीय वचनों के साथ की गई है तथा प्राच्य पाश्चात्य आलोचकों की योग संबन्धी भ्रान्तियों का दूरीकरण भी यत्र-तत्र किया गया है।

★

## वैदिक
# वाङ्मय में योगविद्या

संहिता ब्राह्मण आरण्यक उपनिषदों में योगविद्या के मुख्य और गौण रूप से बहुधा निर्देश मिलते हैं, जिनका स्पष्टीकरण इस ग्रन्थ में किया गया है। जो भारतीय और अभारतीय विद्वान् यह कहते हैं कि योगविद्या अंशतः या पूर्णतः अवैदिक है। उनकी धारणा का दूरीकरण भी इस ग्रन्थ में प्रबल युक्तियों एवं उदाहरणों के आधार पर किया गया है। वेदाङ्गों में योगविद्या का जो विवरण है, वह भी इस ग्रन्थ में संगृहीत हुआ है। प्रत्येक वेद-प्रेमी तथा योगाभ्यासी को यह ग्रन्थ अवश्य ही देखना चाहिए।

[ शीघ्र ही प्रकाश में आ रहे हैं। ]